स्तित्वसूचकानि वेदवाक्यानि देवाभावे वृथैव स्युः । इह चा-कथषोडशप्रभृतयो यज्ञविशेषा मन्तव्याः, स यूपो यज्ञ एव हि क्रतुरुच्यते, यूपरहितस्तु दानाऽऽदिक्रियायुक्तो यज्ञ इति । स्वः स्वर्गस्तत्र राज्यानि जयत्युपार्जयतीत्यर्थ इति । तथा मन्त्रैरिन्द्राऽऽदीनामाह्वानं देवास्तित्व एवोपपद्यते,अन्यथा वृथैव स्यात् । इन्द्राऽऽदीनां मन्त्रपदैराह्वानमेवमवगन्तव्यम्-" इन्द्र ! आगच्छ मेधातिथे मेषवृषण ।" इत्यादि । तस्माद्युक्तितो वेद-वाक्येभ्यश्च सन्ति देवा इति स्थितम् । तदेवं छिन्नो मौर्यपुत्रस्य भगवता संशयः ॥१८८३॥ विशे० । सूत्र० । स्था० । आ० म० ।

देवानां स्वरूपं यथा-

अमिलायमल्लदामा, अणिमिसनयणा य नीरजसरीरा ।
चउरंगुलेण भूमिं, न छिवंति सुरा जिणो कहए ॥

सुरा देवाश्चतुर्निकायभाविनोऽपि अम्लानमाल्यदामानः,तथा न विद्यते निमेषो येषां ते, अनिमेषे नयने येषां ते अनिमेषन-यनाः, तथा नीरजा निर्मलं शरीरं येषां ते नीरजःशरीराः । चतुरङ्गुलेन चतुर्भिरङ्गुलैर्भूमिं न स्पृशन्ति इति जिनः सर्वज्ञः कथयति । व्य० २ उ० ।

देवा दुविहा पण्णत्ता । तं जहा-एगसरीरी चेव,बिसरीरी चेव । स्था० २ ठा० २ उ० ।

देवाश्चतुर्विधास्तद्यथा-

से किं तं देवा ? । देवा चउव्विहा पण्णत्ता । तं जहा-भवणवासी, वाणमंतरा, जोइसिया, वेमाणिया ॥

( से किं तमित्यादि ) अथ के ते देवाः ?। सूरिराह--देवाश्चतुर्विधाः प्रज्ञप्ताः । तद्यथा-भवनवासिनो,व्यन्तराः, ज्योतिष्काः,वैमानिकाः । प्रज्ञा० १ पद । जं० । स० । जी० । उत्त० ।

देवानाह-

देवा चउव्विहा वुत्ता, ते मे कित्तयओ सुण ।
भोमिज्ज वाणमंतर, जोइस वेमाणिया तहा ॥ २०३ ॥

देवा उक्तनिरुक्ताश्चतुर्विधाश्चतुष्प्रकारा उक्ताः, तीर्थकराऽऽदिभिरिति गम्यते । ' ते 'इति तान् देवान् मे मम कीर्तयतः प्रतिपादयतः शृणु,आकर्णय शिष्यं प्रतीदमाह । तत्कीर्त्तनं भवनभेदाभिधानं विनेति । तद्भेदानाह--( भोमिज्ज त्ति ) भूमौ पृथिव्यां भवा भौमेयका भवनवासिनः, रत्नप्रभापृथिव्यन्तर्भूतत्वाद् भवनानाम् । उक्तं हि--" इमीसे रयणप्पभाए पुढवीए असीउत्तरजोयणसयसहस्सबाहल्लाए उवरिं एगं जोयणसहस्समोगाहेत्ता हेट्ठा चेगं जोयणसहस्सं वज्जेत्ता मज्झे अट्ठहत्तरे जोयणसयसहस्से, एत्थ णं भवणवासीणं देवाणं सत्तभवणकोडीओ बावत्तरिं च भवणावाससयसहस्सा हवंतीति मक्खायं ।" ( वाणमंतर त्ति ) आर्षत्वाद्विविधान्यन्तराण्युत्कर्षापकर्षाऽऽत्मकविशेषरूपाणि निवासभूतानि वा गिरिकन्दरविवराऽऽदीनि येषां तेऽमी व्यन्तराः । उक्तं हि-" ते ह्यधस्तिर्यगूर्ध्वं च त्रीनपि लोकान् स्पृशन्तः स्वातन्त्र्यात् परानियोगाच्च प्रायेण प्रतिपन्ननियतगतिप्रचारा मनुष्यानपि कांश्चिद् भृत्यवदुपचरन्ति तथाविधेषु च शैलकन्दरान्तरवनविवराऽऽदिषु प्रतिवसन्त्यतो व्यन्तरा इत्युच्यन्ते । ( जोइस त्ति ) द्योतयन्त इति ज्योतींषि विमानानि, तन्निवासित्वा-देवा अपि ज्योतींषि, ग्रामः समागत इत्यादौ तन्निवासिजनग्रामवत् । विशेषेण मानयन्त्युपभुञ्जन्ति सुकृतिन एतानीति विमानानि,तेषु भवा वैमानिकाः । तथेति समुच्चये,इति सूत्रार्थः ।

एषामेवोत्तरभेदानाह-

दसहा उ भवणवासी, अट्ठहा वाणमंतरा ।
पंचविहा जोइसिया, दुविहा वेमाणिया तहा ॥ २०४ ॥

दशधा त्विति दशधैव ( भवणवासि त्ति ) भवनेषु वस्तुं शीलमेषामिति भवनवासिनः, अष्टधा अष्टप्रकारा वनेषु विचित्रोपवनाऽऽदिषूपलक्षणत्वादन्येषु च विविधाऽऽस्पदेषु क्रीडैकरसिकतया चरितुं शीलमेषामिति वनचारिणो व्यन्तराः, पञ्चविधाः पञ्चप्रकाराः ( जोइसिय त्ति ) ज्योतिःषु विमानेषु भवा ज्योतिष्काः, ज्योतींष्येव वा ज्योतिष्काः, द्विविधा वैमानिकास्तथेति सूत्रार्थः ।

एतानेव नामग्राहमाह-

असुरा नाग सुवण्णा, विज्जू अग्गी वियाहिया ।
दीवोदहिदिसावाया, थणिया भवणवासिणो ॥ २०५ ॥
पिसाय भूय जक्खा य, रक्खसा किन्नरा किंपुरिसा ।
महोरगा य गंधव्वा, अट्ठविहा वाणमंतरा ॥ २०६ ॥
चंदा सूरा य नक्खत्ता, गहा तारागणा तहा ।
दिसाविचारिणो चेव, पंचहा जोइसालया ॥ २०७ ॥
वेमाणिया उ जे देवा, दुविहा ते वियाहिया ।
कप्पोवगा य बोधव्वा, कप्पाईया तहेव य ॥ २०८ ॥
कप्पोवगा बारसहा, सोहम्मीसाणगा तहा ।
सणंकुमारमाहिंद-बंभलोगा य लंतगा ॥ २०९ ॥
महासुक्कसहस्सारा, आणया पाणया तहा ।
आरणा अच्चुया चेव, इइ कप्पोवगा सुरा ॥ २१० ॥
कप्पाईया उ जे देवा, दुविहा ते वियाहिया ।
गेवेज्जाऽणुत्तरा चेव, गेवेज्जा नवविहा तहिं ॥ २११ ॥
हिट्ठिमाहेट्ठिमा चेव, हेट्ठिमामज्झिमा तहा ।
हेट्ठिमाउवरिया चेव, मज्झिमाहिट्ठिमा तहा ॥२१२॥
मज्झिमामज्झिमा चेव, मज्झिमाउवरिमा तहा ।
उवरिमाहिट्ठिमा चेव, उवरिमामज्झिमा तहा ॥२१३॥
उवरिमाउवरिमा चेव, इइ गेवेज्जगा सुरा ।
विजया वेजयंता य, जयंता अपराजिया ॥ २१४ ॥
सव्वट्ठसिद्धगा चेव, पंचहाऽणुत्तरा सुरा ।
इइ वेमाणिया एए-ऽणेगहा एवमादओ ॥ २१५ ॥

सूत्राण्येकादश प्रायः प्रतीतान्येव, नवरम्, असुरा इत्यसुरकुमाराः । एवं नागाऽऽदिष्वपि कुमारशब्दः संबन्धनीयः । सर्वेऽपि ह्यमी कुमाराऽऽकारधारिण एव । यथोक्तम्-कुमारवदेव कान्तदर्शनाः कुमाराः मृदुमधुरललितगतयः शृङ्गाराभिजातरूपविक्रियाः कुमारवच्चोद्धतरूपवेषभाषाऽऽभरणप्रहरणावरणयानवाहनाः कुमारवच्चोल्बणरागाः क्रीडनपराश्चेत्यतः कुमारा इत्युच्यन्ते । ( तारागणा इति ) प्रकीर्णतारकासमूहाः, दिशासु

पापफलभुजो भविष्यन्ति, तथा मनुष्या एवातिसुखिताः प्रकृष्टपुण्यफलभुजो भविष्यन्ति, किमदृष्टनारकदेवपरिकल्पनयेति ?, तदयुक्तम् । प्रकृष्टपापफलभुजां सर्वप्रकारेणापि दुःखेन भवितव्यम्, न चातिदुःखितानामपि नरतिरश्चां सर्वप्रकारं दुःखं दृश्यते, सुखदपवनाऽऽलोकाऽऽदिसुखस्य सर्वेषामपि दर्शनात् । प्रकृष्टपुण्यफलभुजामपि सर्वप्रकारेणापि सुखेन भवितव्यम्, न चेहातिसुखितानामपि नराणां सर्वप्रकारं सुखमवलोक्यते, पूतिदेहोद्भवस्य रोगजराऽऽदिप्रभवस्य च दुःखस्य तेषामपि सद्भावात्, तस्मात्प्रकृष्टपापनिबन्धनसर्वप्रकारदुःखवेदिनो नारकाः, प्रकृष्टपुण्यहेतुकसर्वप्रकारसुखभोगिनो देवाश्चाभ्युपगन्तव्या एवेति ॥ १८७४ ॥

ननु यदि देवाः सन्ति, तर्हि स्वच्छन्दचारिणोऽपि किमित्यत्र ते कदाचिदपि नाऽऽगच्छन्तीत्याह-

संकंतदिव्वपिम्मा, विसयपसत्ताऽसमत्तकत्तव्वा ।

अणहीनमणुयकज्जा, नरभवमसुभं न एंति सुरा ॥ १८७५ ॥

नाऽऽगच्छन्तीह सदैव सुरगणाः, संक्रान्तदिव्यप्रेमत्वाद्विषयप्रसक्तत्वात्, प्रकृष्टरूपाऽऽदिगुणकामिनीप्रसक्तरम्यदेशान्तरगतपुरुषवत्, तथाऽसमाप्तकर्तव्यत्वात्, बहुकर्तव्यताप्रसाधननियुक्तविनीतपुरुषवत् । तथा अनधीनं मनुजानां कार्यं येषां तेऽनधीनमनुजकार्याः, तद्भावस्तत्वं, तस्मान्नेहाऽऽगच्छन्ति सुराः, अनभिमतगेहाऽऽदौ निःसङ्गयतिवदिति । तथा अशुभत्वाद् नरभवस्य तद्गन्धासहिष्णुतया नेहाऽऽगच्छन्ति देवाः, स्वपरित्यक्तकलेवरवदिति ॥ १८७५ ॥

तर्हि किं सर्वथा नेऽत्र नाऽऽगच्छन्ति ?, नैवम्, अत एवाऽऽह-

नवरि जिणजम्मदिक्खा-केवलनिव्वाणमहनिओगेणं ।

भत्तीए सोम्म ! संसय-विच्छेयत्थं व एज्ज सुरा ॥ १८७६ ॥

पुव्वाणुरागओ वा, समयनिबंधा तवोगुणाओ वा ।

नरगणपीडाऽणुग्गह-कंदप्पाईहिँ वा केइ ॥ १८७७ ॥

नवरं जिनजन्मदीक्षाकेवलनिर्वाणमहोत्सवनियोगेन तत्कर्तव्यतानियमेनेह देवा आगच्छेयुः । तत्र सौम्य ! केचिदिन्द्राऽऽदयो निजभक्त्या समागच्छन्ति, केचित्तु तदनुवृत्त्या, अन्ये संशयव्यवच्छेदार्थम् । अपरे तु पूर्वभविकपुत्रमित्राऽऽद्यनुरागात्, समयनिबन्धः प्रतिबोधाऽऽदिनिमित्तः संकेतनिश्चयः, तस्माच्च केचिद्देवा इहाऽऽगच्छन्ति, अन्ये तु महासत्त्वसाध्वादितपोगुणसमाकृष्टाः, केचित्तु पूर्ववैरिकनरगणपीडार्थम्, अपरे तु पूर्वसुहृत्पुत्राऽऽद्यनुग्रहार्थम्, केचिद्देवाः कन्दर्पाऽऽदिनेहाऽऽगच्छन्ति । आदिशब्दात्साध्वादिपरीक्षाहेतोरिति द्रष्टव्यमिति । तदेवं निरूपितं देवानामत्राऽऽगमनकारणम्, अनागमनकारणं च ॥ १८७६॥१८७७ ॥

अथ देवसिद्धावन्यदपि कारणमाह-

जाइस्सरकहणाओ, कासइ पच्चक्खदरिसणाओ य ।

विज्जामंतोवायण-सिद्धीओ गहविगाराओ ॥ १८७८ ॥

उक्किट्ठपुण्णसंचय-फलभावाओऽभिहाणसिद्धीओ ।

सव्वाऽऽगमसिद्धाओ, य संति देव त्ति सद्धेयं ॥ १८७९ ॥

सन्ति देवा इत्येतत् श्रद्धेयमिति प्रतिज्ञा, जातिस्मरणप्रत्ययितपुरुषेण कथनात्, नानादेशविचारितप्रत्यायनपुरुषावलोकितकथितविचित्रवृद्धदेवकुलाऽऽदिवस्तुवत् । तथा कस्यापि तपःप्रभृतिगुणयुक्तस्य प्रत्यक्षदर्शनप्रवृत्तेः, कर्णादत्तस्तनलक्षणत्नाद...



स्मादित्यर्थः । दूरविप्रकृष्टनगराऽऽदिवत् । तथा विद्यामन्त्रोपयाचनेभ्यः कार्यसिद्धेः, प्रसादफलानुमितराजाऽऽदिवत् । तथा (गहविगाराउ त्ति) अत्र प्रयोगः-ग्रहाधिष्ठितपुरुषदेहो जीवव्यतिरिक्तादृश्यवस्त्वधिष्ठितः, पुरुषासंभाव्यविकारवत्क्रियादर्शनात्, संचरिष्णुयन्त्रव्यापारकसमयप्रविष्टदृश्यमानपुरुषाधिष्ठितयन्त्रवत् । तथा तपोदानाऽऽदिक्रियासमुपार्जितोत्कृष्टपुण्यसंभोगफलसद्भावात्, उत्कृष्टपापप्राग्भारफलसद्भावात्सिद्धनारकवत् एतच्च प्रागेव भावितम् । तथा देवा इति यदभिधानं ततोऽपि न देवानां सिद्धिः । एतच्चानन्तरगाथायां व्यक्तीकरिष्यते । तथा सर्वेऽपि च ते आगमाश्च सर्वाऽऽगमास्तेष्वविप्रतिपत्त्या सिद्धत्वाच्च सन्ति देवा इति ॥ १८७८ ॥ १८७९ ॥

यदुक्तम्-"अभिहाणसिद्धीउ (१८७९) त्ति" तद्भावयन्नाह-

देव त्ति सत्थयमिदं सुद्धत्तणओ घडाभिहाणं व ।

अह व मई मणुओ च्चिय, देवो गुणरिद्धिसंपन्नो ॥ १८८० ॥

तं न जओ तच्चत्थे, सिद्धे उवयारओ मया सिद्धी ।

तच्चत्थसीहसिद्धे, माणवसीहोवयारो व्व ॥ १८८१ ॥

'देवाः' इत्येतत्पदं सार्थकं, व्युत्पत्तिमच्छुद्धपदत्वात्, घटाऽऽदिवत् । तत्र दीव्यन्तीति देवा इति व्युत्पत्तिरस्त्येव, समासतद्धितरहितत्वेन च शुद्धत्वम् । भावना चात्र प्रागुक्तैव । अथ परस्य मतिर्भवेत्-ननु मनुष्य एवेह दृश्यमानो देवो भविष्यति, किमदृष्टदेवकल्पनया ? । किं सर्वोऽपि मनुष्यो देवो नेति । नेत्याह-गुणसंपन्नो गणधराऽऽदिः, रिद्धिसंपन्नश्चक्रवर्त्यादिः । अत्रोच्यते-तदेतन्न यस्मात्तथ्ये मुख्ये वस्तुनि क्वापि सिद्धे सत्यन्यत्रोपचारतस्तत्सिद्धिर्मता, यथा मुख्ये यथार्थे सिंहे ऽन्यत्र सिद्धे सतो माणवके सिंहोपचारः सिध्यति, एवमिहापि यदि मुख्या देवाः क्वचित्सिद्धा भवेयुस्तदा राजाऽऽदेर्देवोपचारो युज्यते, नान्यथेति ॥ १८८० ॥ १८८१ ॥

देवाभावे चाग्निहोत्रक्रियाणां वैफल्यमिति दर्शयन्नाह-

देवाभावे विफलं, जमग्गिहोत्ताइयाण किरियाणं ।

सग्गीयं जन्नाण य, दाणाइफलं च तदजुत्तं ॥ १८८२ ॥

वा इत्यथवा, यद् दृश्यम्-देवाभावेऽभ्युपगम्यमाने यदग्निहोत्रादिक्रियाणाम्, "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादिना स्वर्गीयं फलमुक्तं, तथा यज्ञानां च यत्तत्तथाविहितं, दानाऽऽदिफलं च यत्समस्तलोके प्रसिद्धम्, तत्सर्वमयुक्तं प्राप्नोति । स्वर्गो हि देवानां फलमुक्तं स्वर्गिणां चाभावे कुतः स्वर्ग इति । "स एष यज्ञायुधी" इत्यादीनि च वेदवाक्यानि देवास्तित्वप्रतिपादनपराणि वर्त्तन्ते । अतः किं तान् न प्रतिपद्यसे ? । यद्यपि "को जानाति मायोपमान् गीर्वाणानिन्द्रयमवरुणकुबेराऽऽदीन्" इत्यादि वाक्यं, तदपि न देवानां नास्तित्वस्याभिधायकं, किन्तु सुराणामपि मायोपमत्वाभिधानेन शेषर्द्धिसमुदायानां सुतरामनित्यत्वप्रतिपादकं बोद्धव्यम् । अन्यथा हि देवास्तित्वप्रतिपादकवाक्यानि, अग्निमन्त्रपदैरिन्द्राऽऽदीनामाह्वानं चानर्थकं स्यात् ॥ १८८२ ॥

एतदेवाऽऽह-

जमलोमसूरगुरुसुक्क-राइआईणि जयइ जन्नेहिं ।

मंताविहणमेव य, इंदाईणं विहा सव्वं ॥ १८८३ ॥

यमसोमादिपूर्वोक्तस्यायमर्थः-तक्षशरासनिकस्तुनिक्रमानिर्यथाश्रुति यम-सोम-सूर्य-सुरगुरु-स्वाराज्यानि जयति" इत्यादीनि देवा

ह-अरातिः व्याधिः,तथा किमु प्रश्ने,मूर्ति जराम्, अमृतमर्त्यस्ये-ति-अमृतत्वं प्राप्तस्य मर्त्यस्य, पुरुषस्येत्यर्थः । अमरणधर्मिणो मनुष्यस्य किं करिष्यन्ति जराव्याधय इति भावः । अत्रापि देव-सत्ताप्रतिपत्तिः "को जानाति मायोपमान्" इत्यादीनि तु देवा-भावप्रतिपादकानि, अतस्तव संशयः । अयुक्तश्चायम् । यतो-ऽमीषां वेदपदानामर्थं त्वं न जानासि,चशब्दाद्युक्तिं च न वेत्सि। एतेषां हि वेदपदानां नायमर्थो, यस्तवाभिप्रेतः, किं त्वयं वक्ष्य-माणलक्षण इति ।

अत्र भाष्यम्-

तं मन्नसि नेरइया, परतंता दुक्खसंपउत्ता य ।
न तरंतीहागंतुं, सद्धेया सुव्वमाणा वि ॥ १८६७ ॥
सच्छंदयारिणो पुण, देवा दिव्वप्पभावजुत्ता य ।
जं न कयाइ वि दरिस-मुविंति तो संसओ तेसु ।१८६८।

मौर्य ! त्वमेवं मन्यसे-नारकाः स्वकृतपापनरकपालाऽऽदिपर-तन्त्राः पराधीनवृत्तयोऽतीवदुःखसंघातविह्वलाश्च न शक्नुव-न्त्यत्राऽऽगन्तुमतः प्रत्यक्षीकरणोपायाभावात् श्रूयमाणा अपि श्रद्धेया भवन्तु, देवास्तु स्वच्छन्दचारिणो दिव्यप्रभावयुक्ता-श्च तथाऽपि यस्मान्न कदाचिद्दर्शनपथमवतरन्ति, श्रूयन्ते च श्रुतिस्मृत्यादिषु, अतस्तेषु शङ्केति ॥ १८६७ ॥ १८६८ ॥

अत्रोत्तरमाह-

मा कुरु संसयमेए, सुदूरमणुयाइभिन्नजाइए ।
पेच्छसु पच्चक्खं चिय, चउव्विहे देवसंघाए ॥१८६९॥

मौर्यपुत्र ! देवेषु मा संशयं कार्षीस्त्वम्,एतानेव हि सुदूरमत्य-र्थं मनुजाऽऽदिभ्यो भिन्नजातीयान् दिव्याऽऽभरणविलेपनवसन-कुसुममालाऽलङ्कृतान् भवनपतिव्यन्तरज्योतिष्कवैमानिक-लक्षणांश्चतुर्विधदेवसंघातान् मम वन्दनार्थमिहैव समवसरणा-ऽऽगतान् प्रत्यक्षत एव पश्येति ॥ १८६९ ॥

अथैतद्दर्शनात्पूर्वं य आसीत्संशयः, स युक्तोऽभवत्।
नैवम् । कुतः ?, इत्याह-

पुव्वं पि न संदेहो, जुत्तो जं जोइसा सपच्चक्खं ।
दीसंति तक्कया वि य, उवघायाणुग्गहा जगओ ।१८७०।

इह समवसरणाऽऽगतदेवदर्शनात्पूर्वमपि भवान्येषां च संश-यो न युक्तो, यद्यस्माच्चन्द्राऽऽदित्याऽऽदिज्योतिष्कास्तथा सर्वे-णापि च लोकेन स्वप्रत्यक्षत एव सर्वथा दृश्यन्ते, अतो देश-तः प्रत्यक्षत्वात् कथं समस्तामरास्तित्वशङ्का ? । किं च-सन्त्येव देवाः, लोकस्य तत्कृतानुग्रहोपघातदर्शनात् । तथाहि-दृश्यन्ते काश्चित्केचित्त्रिदशाः कस्याऽपि किञ्चिद्धिनवप्रदानाऽऽदिनाऽनुग्र-हं,तत्प्रहरणाऽऽदिना चोपघातं कुर्वन्तः, ततो राजाऽऽदिवत्कथ-मेते न सन्तीति ॥ १८७० ॥

पुनरपि परमाशङ्क्य ज्योतिष्कदेवास्तित्वं साधयन्नाह-

आलयमेत्तं च मई, पुरं व तव्वासिणो तह वि सिद्धा ।
जे ते देव त्ति मया, न य निलया निच्चपरिसुन्ना ।१८७१।

अथैवंभूता मतिः परस्य भवेत्-आलया एव आलयमात्रं च-न्द्राऽऽदिविमानानि, न तु देवाः, तत्कथं ज्योतिष्कदेवानां प्रत्य-क्षत्वमभिधीयते ?। किं तद्वत्? आश्रयमात्रमित्याह-( पुरं ति ) यथा पुरं शून्यं लोकानामालयमात्रं स्थानमात्रं,न तु तत्र लोकाः सन्ति,एवं चन्द्राऽऽदिविमानान्यप्यालयमात्रमेव,न तु तत्र देवाः केचित्तिष्ठन्ति, अतः कथं तेषां प्रत्यक्षत्वम् ? । अत्रोत्तरमाह-तथाऽपि तन्निवासिन आलयवासिनः सामर्थ्याच्च सिद्धास्ते देवा इति मताः संमताः । यो ह्यालयः स सर्वोऽपि तन्निवासिना अधिष्ठितो दृष्टः,यथा प्रत्यक्षोपलभ्यमाना देवदत्ताऽऽद्यधिष्ठिता वसन्तपुराऽऽद्यालयाः, आलयाश्च ज्योतिष्कविमानान्यत आल-यत्वान्यथानुपपत्तेर्ये तन्निवासिनः सिद्धास्ते देवा इति मताः । आह-ननु कथं ते देवाः सिध्यन्ति ?, यादृशा हि प्रत्यक्षेण देवद-त्ताऽऽदयो दृश्यन्ते तेऽपि तादृशा एव स्युरिति । तदयुक्तम् । विशि-ष्टा हि देवदत्ताद्यालयेभ्यश्चन्द्राद्यालया इत्यतस्तन्निवासिनोऽ-पि विशिष्टाः सिध्यन्ति, ते च देवदत्ताऽऽदिविलक्षणा देवा इति ।

अपरस्त्वाह-नन्वालयत्वादित्ययं हेतुस्तन्निवासिजनसाधने-ऽनैकान्तिकः, शून्याऽऽलयैर्व्यभिचारात् । अत्रोत्तरमाह-( न य निलयेत्यादि ) न च निलया आलया नित्यमेव शून्या भ-वन्ति । अयमभिप्रायः-ये केचिदालयास्ते प्राग्, इदानीमेष्यति वा कालेऽवश्यमेव तन्निवासिभिरधिष्ठिता एव भवन्ति, न तु नित्यमेव परिशून्याः । ततो यदा तदा वा चन्द्राऽऽद्यालयनि-वासिनो देवाः सिध्यन्ति, इति ॥ १८७१ ॥

पुनरप्यत्र पराभिप्रायमाशङ्क्य परिहारमाह-

को जाणइ व किमेयं, ति होज्ज निस्संसयं विमाणाइं ।
रयणमयनभोगमणा-दिह जह विज्जाहराईणं ॥१८७२॥

यदि वा एवंभूता मतिः परस्य भवेद्यदुत-चन्द्राऽऽद्यालय-त्वेन यद्गीयते तदिदं किमेतत् को जानाति किंस्विदेतदिति सूर्यो-ऽग्निमयो गोलश्चन्द्रस्त्वम्बुमयः स्वभावतः स्वच्छः, आहोस्विदे-वंभूता एवैते भास्वररत्नमया गोलका ज्योतिष्कविमानान्य-तः कथमेतेषामालयत्वसिद्धिः? । अत्र प्रतिविधानमाह- निः-संशयं विमानान्येतानि, रत्नमयत्वे सति नभोगमनात्, पुष्प-काऽऽदिविद्याधरतपःसिद्धविमानवदिति । अत्र विकारप-वनाऽऽदिव्यवच्छेदार्थं रत्नमयत्वविशेषणमिति ॥ १८७२ ॥

अपरमपि पराभिप्रायमाशङ्क्य परिहरन्नाह-

होज्ज मई मायं, तहा वि तक्कारिणो सुरा जे ते ।
न य मायाइविगारा, पुरं व निच्चोवलंभाओ ॥१८७३॥

अथ परस्य मतिर्भवेन्नैते चन्द्राऽऽदिविमानान्यालयाः, किं तु मायेयं मायाविना केनाऽपि प्रयुक्ता । अत्रोच्यते-मायात्वम-मीषामसिद्धं, वाङ्मात्रेणैव भवताऽभिधानात्तथाऽप्यभ्युपगम्यो-च्यते, ये तत्कारिणः तथाविधमायाप्रयोक्तारस्ते सुराः सिद्धा एव, मनुष्याऽऽदीनां तथाविधवैक्रियकरणादर्शनात्, अभ्युपग-म्य च मायात्वममीषामभिहितं, न चैते मायाऽऽदिविकाराः, नि-त्योपलम्भात्, सर्वेण सर्वदा दृश्यमानत्वादित्यर्थः, प्रसिद्धपाट-लिपुत्राऽऽदिपुरवदिति । मायेन्द्रजालकृतानि हि वस्तूनि न नित्यमुपलभ्यन्त इति नित्यविशेषणोपादानमिति ॥ १८७३ ॥

प्रकारान्तरेणाऽपि देवास्तित्वं साधयन्नाह-

जइ नारगा पवन्ना, पगिट्ठपावफलभोइणो तेणं ।
सुबहुगपुण्णफलभुजो, पवत्तियव्वा सुरगणा वि ।१८७४।

इह स्वकृतप्रकृष्टपापफलभोगिनस्तावत्कचिन्नारकाः प्रतिपत्त-व्याः, ते च यदि प्रपन्नाः ( तेणं ति ) तर्हि तेनैव प्रकारेण स्वोपार्जितसुप्रबहुकपुण्यफलभुजः सुरगणा अपि प्रतिपत्तव्याः। अत्राऽऽह-नार्वदेवा तिर्यक्षनरास्तिर्येव्वश्यातिदुःखिताः प्रकृष्ट-

आसित्तो सावच्चो, अणवच्चो होइ ऊसित्तो ॥

स दूषी द्विविधो ज्ञातव्यो भवति-आसिक्तः,उपसिक्तश्च । आसिक्तो नाम-सापत्यो यस्यापत्यमुत्पद्यते, सबीज इति भावः । यस्तु निरपत्योऽपत्योत्पादने सामर्थ्यविकलो,निर्बीज इत्यर्थः। स उपसिक्त उच्यते । बृ० ४ उ० । नि० चू० । पं०भा०। पं०चू० ।

दूसिया-दूषिका-स्त्री०। दूषयति नेत्रं क्लिन्नं करोति । दूष-णिच्-ण्वुल् । वाच० । नेत्रयोर्मले, नि० चू० ३ उ० । स्था० ।

दूसइल-देशी-दुर्भग, दे० ना० ५ वर्ग ४३ गाथा ।

दूहट्ट-देशी-लज्जाकुमनसि, दे० ना० ५ वर्ग ४८ गाथा ।

दूहव-दुर्भग-त्रि०। "वात्वे दुर्भगसुभगे वः" ॥ ८ । २ । १९२ ॥ इति गस्य वः । 'दूहवो ।' अत्रगाभे, प्रा० १ पाद ।

दे-दे-अव्य० " दे संमुखीकरणे च । " ॥ ८ । २ । १९६ ॥ संमुखीकरणे सख्या आमन्त्रणे च दे इति प्रयुज्यते । " दे पसिअ ताव सुंदरि !, दे आपसिअ निअत्तसु । " प्रा० २ पाद ।

देअर-देवर-पुं० । " कगचजतदपयवां०-॥ ८ । १ । १७७ ॥ इत्यादिना वलुक् । 'देअरो ।' प्रा० १ पाद । वाच० । अनु० ।

देउल-दिवकुल-न० । "यावत्तावज्जीवितावर्तमानाऽवटप्रावारकदेवकुलैवमेवेनः " ॥ ८ । २ । २७१ ॥ इति सस्वरस्य वकारस्यान्तर्वर्तमानस्य वा लुक् । 'देउलं ।' प्रा० २ पाद । देवस्थाने, आ० म० १ अ० २ खण्ड । रा० ।

देउलदरिसण-देवकुलदर्शन-न० । देवप्रतिमादर्शने, पिं० ।

देउलिया-देवकुलिका-स्त्री० । यक्षाद्यीनामायतने, बृ० १ उ० २ प्रक० । देवकुलपरिपाटके, न० । ओघ० ।

देक्ख-दृश-धा० । भ्वा०-पर०-सक०-अनिट् । चाक्षुषज्ञाने, वाच० । "दृशो निअच्छपेच्छ०-" ॥ ८ । ४ । १८१ ॥ इत्यादिना देक्खाऽऽदेशः । 'देक्खइ ।' प्रा० ४ पाद । पश्यति । अदर्शत् । अद्राक्षीत् । वाच० ।

देज्ज-देय-त्रि० । दातुं योग्ये, षो० १२ विव० ।

देप्पिणु-दत्त्वा-अव्य० । " एप्प्येप्पिण्वेव्येविणवः " ॥ ८ । ४ । ४४० ॥ इत्यपभ्रंशे क्त्वाप्रत्ययस्यैप्पिण्वादेशः । दानं कृत्वेत्यर्थे, 'जेप्पि असेसु कसायबलु.देप्पिणु अभउ जयस्सु ।' प्रा० ४ पाद । अशेषकषायबलं जित्वा जगतोऽभयं दत्त्वा । प्रा० ढुं० ४ पाद ।

देगड-इतिकार-पुं० । शिल्पाऽऽचार्यभेदे, प्रज्ञा० १ पद । ज्ञा० ।

देर-द्वार-न० । "द्वारे वा" ॥ ८ । १ । ७९ ॥ इति द्वारशब्दे आत एत्वं । 'देरं ।' पक्षे-'दुआरं । दारं । वारं ।' निर्गमप्रवेशमुखे,प्रा० १ पाद ।

देलमहत्तर-देलमहत्तर-पुं० । सूराऽऽचार्यशिष्ये दुर्गस्वामिगुरौ, अयमाचार्यो ज्योतिर्निमित्तशास्त्रेषु अतिविद्वानासीत् । जै० इ० ।

देव-पुं०-न० । देव-पुं० । "गुणाऽऽद्यः क्लीबे वा"॥ ८ । १ । ३४॥ इति वा क्लीबत्वम् । 'देवाणि ।' देवाः । प्रा० १ पाद । दीव्यन्ति निरुपमक्रीडामनुभवन्तीति देवाः। नं० । दश० । स्था० । दीव्यन्ति यथेच्छं क्रीडन्तीति देवाः । आ० म० १ अ० १ खण्ड । प्रज्ञा० । स्था० । दीव्यन्ति स्वरूपे इति देवाः । अष्ट० २९ अष्ट० ।

तओ ठाणाइं देवे पीहेज्जा । तं जहा-माणुस्सगं भवं,आरिए खेत्ते जम्मं, सुकुलपच्चायाइं ।

( पीहेज्ज त्ति ) स्पृहयेदभिलषेत् । आर्यक्षेत्रमर्द्धषड्विंशतिजनपदानामन्यतरं मगधाऽऽदिसुकुले इक्ष्वाक्वादौ देवलोकात्प्रतिनिवृत्तस्याजानिर्जन्म, आयातिर्वा आगतिः, सुकुलप्रत्याजातिः, सुकुलप्रत्यायातिर्वा, तामिति । स्था० ३ ठा० ३ उ० । ( देवपरितापः ' परिताव ' शब्दे वक्ष्यते )

इच्चेएहिं तिहिं ठाणेहिं देवे चइस्सामि त्ति जाणइ-विमाणाभरणाइं णिप्पभाइं पासित्ता, कप्परुक्खगं मिलायमाणं पासित्ता, अप्पणो तेयलेस्सं परिहायमाणं जाणित्ता ।

विमानाऽऽभरणानां निष्प्रभत्वमौत्पातिकं,तच्चक्षुर्विभ्रमरूपम।(कप्परुक्खगं ति)चैत्यवृक्षम,(तेयलेस्सं ति)शरीरदीप्तिं,सुखासिकां वा । 'इच्चेएहिं' इत्यादिनिगमनम् । भवन्ति चैवंविधानि लिङ्गानि देवानां च्यवनकाले । उक्तं च-"माल्यम्लानिः कल्पवृक्षप्रकम्पः, श्रीह्रीनाशो वाससां चोपरागः । दैन्यं तन्द्रा कामरागाङ्गभङ्गौ, दृष्टेर्भ्रान्तिर्वेपथुश्चारतिश्च ॥ १ ॥" इति । स्था० ३ ठा० ३ उ० । दीव्यन्ति क्रीडादिधर्मभाजो भवन्ति,दीव्यन्ते स्तूयन्ते ये ते देवाः। स्था० ४ ठा० १ उ० । " दिवु " क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिषु,अतः दिवेरच्प्रत्यये देव इति सिद्धम् । दश० १ अ० । प्रवचनपत्यादिषु, आ० म० १ अ० २ खण्ड । आव० । आ० चू० । दर्श० । ओघ० । पिं० । स० । स्था० । ज्ञा० । प्रश्न० । औ० । सूत्र० । उत्त० । विशे० । ज्योतिष्कवैमानिकेषु, उत्त० १९ अ० । अनुत्तरसुरान्तेषु, औ० ।

देवानामस्तित्वं सशयवन्तसप्तमं गणधरं मौर्यं प्रत्याह भगवान्महावीरः-

ते पव्वइए सोउं, मोरिओ आगच्छइ जिणसगासं ।
वच्चामि ण वंदामी, वंदित्ता पज्जुवासामि ॥ १८६४ ॥
आभट्ठो य जिणेणं, जाइजरामरणविप्पमुक्केणं ।
नामेण य गोत्तेण य,सव्वण्णू सव्वदरिसी णं ।१८६५।

गाथाद्वयमपि प्रकटार्थम् ॥ १८६४ ॥ १८६५ ॥

आभाष्य ततः किमुक्तः ?, इत्याह-

किं मन्नणे अत्थि देवा,उयाहु नत्थि त्ति संसओ तुज्झ ।
वेयपयाण य अत्थं,न जाणसी तेसिमो अत्थो ।१८६६।

हे आयुष्मन् मौर्य ! त्वमेवं मन्यसे-किं देवाः सन्ति, न वेति, उभयथाऽपि वेदपदश्रवणात् ?। तथाहि-"स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गलोकं गच्छति।" इत्यादि । तथा-"अपाम सोमं अमृता अभूम,अगमन् ज्योतिरविदाम देवान्,किं नूनमस्मात्तृणवदरातिः,किमु धूर्त्तिरमृतमर्त्यस्य।" इत्यादि । तथा'को जानाति मायोपमान् देवान् गीर्वाणानिन्द्रयमवरुणकुबेराऽऽदीन् ।' इत्यादि। एतेषां च वेदपदानामयमर्थस्तव बुद्धौ प्रतिभासते, यथा स एष यज्ञ एव दुरितवारणक्षमत्वादायुधं प्रहरणं यस्यासौ यज्ञायुधी, यजमानोऽञ्जसा प्रगुणेन न्यायेन स्वर्गलोकं गच्छति, इति देवसत्ताप्रतिपत्तिः । तथा अपाम-पीतवन्तः, सोमं लतारसम्, अमृता अमरणधर्माणः, अभूम जाताः स्म, अगमन् गताः, ज्योतिः स्वर्गम्, अविदाम देवान्देवत्वं प्राप्ताः स्म, किं नूनमस्मान्तृणवत्करिष्यति, कोऽसाविति-

दूराजय-दूरालय-पुं० । मोक्षे, मोक्षमार्गे च । आचा० १ श्रु० २ अ० ३ उ० ।

दूरुच्च-दूरवत्-त्रि० । दूरस्थे, आव० ४ अ० ।

दूरुहइत्ता-दुरारुह्य-अव्य० । दुष्प्रमारुह्येत्यर्थे, कपा० २ अ० ।

दूरुहमाणी-दुरारोहन्ती-स्त्री० । दुष्प्रमारोहन्त्याम्, दशा० ५ अ० १ उ० ।

दूस-दुष-धा० । दिवा०-पर०-अक०-अनिट् । वैकृत्ये, वाच० । "दुषाऽऽदीनां दीर्घः" ॥ ८ । ४ । २३५ ॥ इति स्वरस्य दीर्घः । 'दूसइ ।' प्रा० ४ पाद । दुष्यति । अदुषत् । अदुदयत् । वाच० ।

दूष्य-न० । तन्तुसन्तानसम्भवे, जं० २ वक्ष० । वस्त्रे, ज्ञा० १ श्रु० १ अ० । उत्त० । आचा० । आ० म० । नि० चू० । आच्छादनवस्त्रे, औ० । वस्त्रजाते, जी० ३ प्रति० ४ उ० । चीनांशुकाऽऽदौ च । सूत्र० २ श्रु० २ अ० । प्रव० ।

दूसंतर-दूष्यान्तर-न० । वस्त्ररचितभित्त्यन्तरे, उत्त० १६ अ० ।

दूसगणि ( ण् )-दूष्यगणिन्-पुं० । नन्द्यध्ययनकर्तुर्देववाचकस्य स्वनामख्याते गुरौ, नं० ।

दूसण-दूषण-न० । दूष-णिच्-ल्युट् । कलङ्के, सं० । रावणस्य मातृष्वस्त्रेये भ्रातरि च । वाच० ।

दूसपट्टपरिपूय-दूष्यपट्टपरिपूत-न० । वस्त्रपट्टगालिते, स्था० ।

दूसपणग-दूष्यपञ्चक-न० । वस्त्रपञ्चके, दश० ।

दुविहं च दूसपणगं, समासओ तं पि होइ नायव्वं ।
अप्पडिलेहिय दूसं, दुप्पडिलेहं च विन्नेयं ॥ ७ ॥ दश० १ अ० ।

अप्पडिलेहियदूसे, तूली उवहाणगं च णायव्वं ।
गंडुवधाणाऽऽलिंगिणि, मसूरए चेव पोत्तमए ॥६८४॥

दूष्यं वस्त्रं तद् द्विविधम् । अप्रत्युपेक्ष्यं, दुष्प्रत्युपेक्ष्यं च । तत्र यत्सर्वथाऽपि न प्रत्युपेक्षितुं शक्यते तदप्रत्युपेक्ष्यम्, यच्च सम्यक् न शक्यते प्रत्युपेक्षितुं तद् दुःप्रत्युपेक्ष्यम् । तत्र अप्रत्युपेक्षितदूष्यपञ्चकं यथा-तूली सुसंस्कृतो रुतभृतोऽर्कतूलाऽऽदिभृतो वा विस्तीर्णः शयनीयविशेषः । तथा उपधानकं हंसरोमाऽऽदिपूर्णमुच्छीर्षकम् । तथा उपधानकस्योपरि कपोलप्रदेशे या दीयते सा गण्डोपधानिका, गल्लमसूरिकेत्यर्थः । तथा जानुकूर्पराऽऽदिषु या दीयते सा आलिङ्गिनी । तथा वस्त्रकृतं चर्मकृतं वा वृत्तं रुताऽऽदिपूर्णमासनं मसूरकः । एतानि सर्वाण्यपि पोतमयानि वस्त्रमयानि प्रायेणेति ।

अथ दुष्प्रत्युपेक्षितपञ्चकमाह-

पल्हवि कोयवि पावा-रग नवए तह य दाढगाली य ।
दुप्पडिलेहियदूसे, एयं बीयं भवे पणगं ॥ ६८५ ॥

पह्लविः, कोयविः, प्रावारकः, नवकं, तथा दढगालिश्च, एतद् दुष्प्रत्युपेक्षितदूष्यविषयं द्वितीयं पञ्चकं भवेत् ।

अथैनदेव व्याख्यानयन्नाह-

पल्हवि हत्थुत्थरणं, कोयविओ रूयपूरिओ पडओ ।
दढगालि धोयपोती, सेसपसिद्धा भवे भेदा ॥ ६८६ ॥

पह्लविर्हस्त्यास्तरणं हस्तिनः पृष्ठे यदास्तीर्यते, अरक इत्यर्थः । ये चान्ये आस्तरकाऽऽदयोऽल्परोमयुक्ता बहुरोमयुक्ता वा ते सर्वेऽप्यन्तर्भवन्ति । यदुक्तं निशीथचूर्णौ-"जे य बहुा अत्थरगा इच्चाइमाणभेदा मउरोमा बब्भूतरोमा वा, ते सव्वे इत्थ निवयंति त्ति ।" (बहुअत्थरग त्ति) यः किल उष्ट्रोपरि न्यस्यते । तथा कोयविको रुतपूरितः पटः, वूरुढीति यदुच्यते । ये चान्ये उल्लवणरोमाणो नेपालकम्बलप्रभृतयस्ते सर्वेऽप्यात्रान्तर्भवन्ति । उक्तं च-"जे अन्ने एवमाइभेदा उल्लणरोमा कंबलगादि ते सव्वे इत्थ निवयंति ।" तथा-दढगालिर्धौतपोतिका ब्राह्मणानां सम्बन्धि सदशकरिधानवस्त्रमित्यर्थः । ये चान्ये विरलसूत्रपट्टप्रभृतयो भेदास्ते सर्वेऽत्र निपतन्ति । उक्तं च-"विरलिमाई भूरिभेदा सव्वे एत्थ निवयंति त्ति ।" (विरलिमादि त्ति) दोरियाप्रमुखा, शेषौ च प्रावारकनवकलक्षणौ प्रसिद्धावेव भेदौ । तत्र प्रावारकः सलोमकः पटः । स च माणिकाप्रकृतिकः । अन्ये तु प्रावारको बृहत्कम्बलः परियत्थिर्वेत्याहुः । प्रव० ८ द्वार । बृ० । अप्रतिलेखितदूष्यपञ्चके चैकाशनकम् । त्रसवधेऽपि तदेव प्रायश्चित्तम् । जीत० ।

दूसमा-दुःषमा-स्त्री० । 'दुसमा' शब्दार्थे, ज०६ श०७ उ० ।

दूसमित्त-दूष्यमित्र-पुं० । पाटलिपुत्रे मौर्यवंशनाशे सत्यभिजिपित्ते स्वनामख्याते राजनि, ती० २० कल्प ।

दूसरणाम-दुःस्वरनाम-न० । 'दुसरनाम' शब्दार्थे, कर्म० ६ कर्म० ।

दूसरयण-दूष्यरत्न-न० । प्रधानवस्त्रे, ज्ञा० १ श्रु० १ अ० । कल्प० । औ० ।

दूसल-देशी-दुर्भगे, दे० ना० ५ वर्ग ४२ गाथा ।

दूसह-दुस्सह-पुं० । 'दुसह' शब्दार्थे, प्रश्न० १ आश्र० द्वार ।

दूसासण-दुःशासन-पुं० । "लुप्तयरवशषसां शषसां दीर्घः" ॥ ८ । १ । ४३ ॥ इति प्राकृतलक्षणवशादुपरि लुप्तशकारस्य शस्याऽऽदेः स्वरस्य दीर्घः । 'दूसासणो ।' प्रा० १ पाद । स्वनामख्याते दुर्योधनभ्रातरि, वाच० ।

दूसिय-दूषित-त्रि० । दत्तदूषणे, प्राप्तदूषणे, अभिशस्ते, मैथुनापवादयुक्ते, वाच० । औ० ।

दूसियपंडग-दूषितपण्डक-पुं० । पण्डकभेदे, दूषितपण्डको द्विविधः-आसिक्तः, उपासिक्तश्च । बृ० । उपजातपण्डकोऽपि द्विविधो-वेदोपघाते, उपकरणोपघाते च ।

तत्र दूषितं पण्डकं तावद्व्याख्यानयति-

दूसियवेओ दूसिय, दोसु वि वेएसु सज्जए दूसी ।
दूमेति सेसवेदो, दोसु व सेविज्जए दूसी ॥

दूषितो वेदो यस्य स दूषितवेदः, एष दूषित उच्यते । द्वयोर्वा नपुंसकपुरुषवेदयोः, अथवा नपुंसकस्त्रीवेदयोः सज्जयति प्रसङ्गं करोति, स प्राकृतशैल्या दूसी भण्यते । यो वा शेषौ स्त्रीपुरुषवेदौ दूषयति निन्दति स दूषी, द्वाभ्यां वा-आस्यकपोलकाभ्यां यः सेव्यते, सेवते वा स दूषी ।

अस्यैव भेदानाह-

आसित्तो ऊसित्तो, दुविहो दूसी उ होइ नायव्वो ।

पुत्रो बलिष्ठः,दुहिता रेवती। सा च गोकुलग्रामे संगमेन परिणीता, प्रियमती स्वाऽऽयुःक्षयात् पञ्चत्वमुपगता, धनदत्तोऽपि संसारभयभीतः प्रव्रज्यामग्रहीत्, गुरुभिश्च सार्द्धं विहरति। ततः कालान्तरे पुनरपि यथाविहारक्रमं तत्रैव ग्रामे समागतो निजदुहितुर्देवकया वसतावस्थात्। तदानीं च तयोर्द्वयोरपि ग्रामयोः परस्परं वैरं वर्त्तते स्म। विस्तीर्णग्रामवासिना च गोकुलेन गोकुलग्रामस्योपरि धाटी सूत्रिता,धनदत्तश्च तन्निवारणाय ग्रामे भिक्षायै व्रजितवांस्ततो देवकया दुहित्रा शय्यातर्या जल्पितः-यथा हे पितः! त्वं गोकुलग्रामे यास्यसि, ततो निजदौहित्र्या रेवत्याः कथय-यथा तव जनन्या संदिष्टम्-अयं ग्रामस्योपरि कल्ये धाट्या समागमिष्यति,ततः सकलमपि स्वकीयमेकान्ते स्थापयेरिति। ततः साधुना तथैव तस्यै कथितं,तया च निजभर्त्तुः,तेन च सकलग्रामस्य कथितम्। ततः सर्वोऽपि ग्रामः सन्नद्धबद्धकवचोऽभवत्, आगतश्च द्वितीयदिने धाट्या विस्तीर्णग्रामो, जातं परस्परं महद्युद्धम्,तत्र सुन्दरो बलिष्ठश्च धाट्या सह गतो,संगमश्च गोकुलग्रामे वसति,त्रयोऽपि च युद्धं पञ्चत्वमुपजग्मुः, देवकी च पतिपुत्रजामातृमरणमाकर्ण्य विलपितुं प्रावर्त्तिष्ट,लोकश्च तन्निमित्तात् समागतोऽग्राहीत्-यदि गोकुलग्रामो धाटीमागच्छन्तीं नाज्ञास्यत,ततोऽसन्नद्धो मारयिष्यत्। तथा च न पत्यादयो म्रियेरन्। नूनं केन दुरात्मना गोकुलग्रामो ज्ञापितः। एतच्च लोकस्य वचः श्रुत्वा संजातकोपा सैवमवादीत्-नूनं अज्ञानतया पित्रा दुहितुः संदिष्टं,ततस्तेन सर्वलोकविरुद्धकेन मत्पतिपुत्रजामातृमारकेण पित्रा ज्ञापितः। ततः स लोके स्थाने स्थाने धिक्कारं लभते,प्रवचनस्य च मालिन्यमुदपादि। सूत्रं सुगमम्। पिं०। पञ्चा०। ध०। ग०। दर्श०। नि० चू०। दूतविद्यायां च। व्य० १ उ०।

दूईपिंड-दूतीपिण्ड-पुं०। कार्यलक्षणाय दूत्वं विधत्ते इति दूतीपिण्डः। द्वितीये उत्पादनादोषे, आचा० २ श्रु० १ चू० १ अ० ९ उ०।

जे भिक्खू दूईपिंडं भुंजइ, भुंजंतं वा साइज्जइ ॥ ६० ॥

गिहिसंदेसगं णेति, आणेति वा, जं तन्निमित्तं पिंडं लभति, सो दूतीपिंडो।

गाहा-

जे भिक्खू दूतिपिंडं, गेण्हेज्ज सयं तु अहव सातिज्जे।

सो आणा अणवत्थं, मिच्छत्तविराहणं पावे ॥१३६॥

अप्पणा गेण्हति, अण्णं वा गेण्हंतं अणुजाणाति, तस्स आणादिया दोसा, चउलहुं च पच्छित्तं।

( अत्रेतनपाठस्तु पिण्डनिर्युक्तिपाठतो गतार्थः )

नवरं बितियपदे इमेहिं कारणेहिं करेज्जा-

असिवे ओमोयरिए, रायदुट्ठे भए व गेलण्णे।

अद्धाणरोहए वा, कुज्जा तं वा वि जयणाए ॥१४१॥

पूर्ववत् कण्ठ्या। नि० चू० १३ उ०।

दूण-देशी-हस्तिनि, दे० ना० ५ वर्ग ४४ गाथा।

दूत-दूत-पुं०। अन्येषां ज्ञात्वा राजाऽऽदेशनिवेदके,औ०। रा०। कल्प०। ज्ञा०। भ०।

दूतविज्जा-दूतविद्या-स्त्री०। विद्याभेदे, व्य० १ उ०। काचिद् दूतविद्या भवति, तया च दूतविद्यया यो दूरे आगच्छति, तस्य दंशस्थानमापद्यते,तेनेतरस्य दंशस्थानमुपशाम्यति। व्य०५उ०।

दूब्भगसत्ता-दुर्भगसत्त्वा-स्त्री०। दुर्भगः सत्त्वः प्राणी यस्याः सा तथा। दुर्भगप्राणिकायां योषिति, ज्ञा० १ श्रु० १६ अ०।

दूभगनिंबोलिया-दुर्भगनिम्बगुलिका-स्त्री०। निम्बगुलिकेव निम्बफलमिव अत्यन्तानादेयत्वसाधर्म्याद् दुर्भगानां मध्ये निम्बगुलिका दुर्भगनिम्बगुलिका। दुर्भगत्वान्निम्बगुलिकावदनादेयायाम्, ज्ञा० १ श्रु० १६ अ०।

दुर्भगनिर्वोलिता-स्त्री०। दुर्भगानां मध्ये निर्वोलिता निर्मथिता निमज्जिता दुर्भगनिर्वोलिता। दुर्भगानां मध्ये निमज्जनायाम्, ज्ञा० १ श्रु० १६ अ०।

दूमग-दावक-त्रि०। उपतापके, प्रश्न० ३ आश्र० द्वार।

दूमण-दवन-न०। उपतापने, प्रश्न० ३ आश्र० द्वार।

धवलन-न०। श्वेतीकरणे, व्य० ४ उ०।

दुर्मनस्-न०। त्रि०। दुष्टमनसि, सूत्र० १ श्रु० २ अ० २ उ०।

दूमिअ-धवलित-त्रि०। " धवलेर्दुमः " ॥ ८। ४। २४ ॥ इति धवलयतेर्ण्यन्तस्य दुमादेशे " स्वराणां स्वरा बहुलम्। " ॥८।४।२३८॥ इति दीर्घत्वम्। 'दूमिअं।' प्रा० ४ पाद। सेटिकादिना श्वेतीकृते, ध० ३ अधि०। कल्प०। ज्ञा०। नि० चू०। दूमिया नाम सुकुमारलेपेन सुकुमारीकृतकुड्या,सेटिकया धवलीकृतकुड्या वा। बृ० १ उ०।

दूमिय-धवलित-त्रि०। 'दूमिअ' शब्दार्थे, प्रा० ४ पाद।

दूय-दूत-पुं०। अन्येषां गत्वा राजाऽऽदेशनिवेदके, भ० ७ श० ९ उ०। औ०।

दूयकम्म-दूतकर्म-न०। द्वितीये उत्पादनादोषे, उत्त० २४ अ०। यदा गृहस्थगृहे गुप्तप्रकटसमाचारान् स्वजनाऽऽदीनां कथयित्वाऽऽहारं गृह्णाति तदा दूतकर्माऽऽख्यो द्वितीयो दोषः। उत्त० २४ अ०।

दूयपलास-दूतपलाश-न०। वाणिजकग्रामनगरस्येशानकोणे स्वनामख्याते चैत्ये, उपा० १ अ०।

दूयविज्जा-दूतविद्या-स्त्री०। विद्याभेदे, व्य० १ उ०।

दूर-दूर-त्रि०। विप्रकृष्टे, भ० १ श० १ उ०। नि० चू०। अगोचरे च। भ० २ श० १ उ०। विप्रकर्षे, ज्ञा० १ श्रु० १ अ०। नि०। अत्यर्थे च। सं०। दीर्घकाले, दूरवर्तित्वान्मोक्षे च। पुं०। सूत्र० १ श्रु० २ अ० २ उ०।

दूरगइय-दूरगतिक-त्रि०। सौधर्माऽऽदिगतिकेषु, स्था० ८ ठा०।

दूरपाय-दूरपात-न०। दूरात्पतने, प्रश्न० ३ आश्र० द्वार।

दूरय-दूरग-त्रि०। असमीपवर्तिनि, सूत्र० १ श्रु० ५ अ० २ उ०।

दूरसुव्वंत-दूरश्रूयमाण-त्रि०। दूरे श्रूयमाणे, प्रश्न० ३ आश्र० द्वार।

दूरालइय-दूरालयिक-त्रि०। दूरालयो मोक्षस्तन्मार्गो वा, स विद्यते यस्येति मत्वर्थीयष्ठन्,दूरालयिकः। मोक्षगामिनि,आचा० १ श्रु० ३ अ० ३ उ०।

यथा-

" यस्य बुद्धिर्न लिप्येत, हत्वा सर्वमिदं जगत् ।
आकाशमिव पङ्केन, नासौ पापेन युज्यते ॥ १ ॥
कलुषं वा दुहिलं, समता पुण्यपापयोः । " आ० म० १ अ० २ खण्ड । पुण्यपापनास्त्यादौ, बृ० १ उ० ।

यथा-

" एतावानेव लोकोऽयं, यावानिन्द्रियगोचरः ।
भद्रे ! वृकपदं पश्य, यद्वदन्त्यबहुश्रुताः ॥ १ ॥
पिब खाद च जातु शोभने !, यदतीतं वरगात्रि ! तन्न ते ।
न हि भीरु ! गतं निवर्त्तते, समुदयमात्रमिदं कलेवरम् ॥२॥"
इत्यादि वेदवचनाऽऽदिवत्तथाविधयुक्तिरहितम् । अनु० ।

**दुहोवणीय**-दुःखोपनीत-त्रि० । सामीप्येन प्राप्तदुःखे, दश० १ चू० । दुःखेन पीडयोपनीतान्युच्चारितानि दुःखोपनीतानि । पीडयोच्चारितेषु, न० । सूत्र० १ श्रु० ५ अ० १ उ० ।

**दूअ**-दूत-पुं० । अन्येषां गत्वा राजाऽऽदेशनिवेदके, कल्प० १ अधि० ३ क्षण ।

**दूइज्जंत**-दूयमान-त्रि० । गच्छति, व्य० ७ उ० ।

द्रवत्-त्रि० । ग्रामानुग्रामं गच्छति, "दूइज्जंता दुविधा, णिक्कारणिगा तहेव कारणिगा । असिवादी कारणिगा, चक्के थूभाइया इतरे ॥ १ ॥ " बृ० ५ उ० ।

**दूइज्जंतग**-दूयमानक-पुं० । मोराकसन्निवेशस्थेषु स्वनामख्यातेषु पाखण्डिषु, "तत्थ मोराए दूइज्जंतगा नाम पासंडा, तेसिं तत्थ आवासो ।" स्वनामख्याते तेषामधिपतौ, भगवतो महावीरस्य पितुः सिद्धार्थकस्य वयस्ये, मित्रे च । आ० म० । मोराकसंनिवेशं प्राप्तस्य (तान्निवासी दूइज्जन्तकाभिधानपाखण्डस्थो दूइज्जन्तक एवोच्यते) पितुः सिद्धार्थस्य वयस्यो मित्रं स भगवन्तमभिवाद्य वसतिं दत्तवानिति । आ० म० १ अ० २ खण्ड । आ० चू० ।

**दूइज्जमाण**-दूयमान-त्रि० । विहरति, धातूनामनेकार्थत्वात् । आचा० २ श्रु० १ चू० १ अ० ४ उ० ।

द्रवत्-त्रि० । गच्छति, औ० । रा० । विपा० । ज्ञा० । आचा० । भ० ।

**दूइज्जित्तय**-द्रोतुम्-अव्य० । विहर्तुमित्यर्थे, स्था० ५ ठा० २ उ० । "गामाणुगामं दूइज्जित्तए त्ति ।" ग्रामानुग्रामं विहर्तुम् । कल्प० ३ अधि० ६ क्षण ।

**दूइपलासय**-दूतिपलाशक-न० । वाणिजकग्रामे स्वनामख्याते चैत्ये, यत्र श्रीमहावीरस्वामी समवसृतः । भ० १० श० ४ उ० । आ० चू० ।

**दूई**-दूती-स्त्री० । परस्परसंदिष्टार्थकथिका दूती । पिं० । द्वितीये उत्पादनदोषे, स्था० ३ ठा० ४ उ० ।

दूतीपिण्डो यथा-

सग्गामे परग्गामे, दुविहा दूई उ होइ नायव्वा ।
सा वा सो वा पभणइ, भणइ तं छन्नवयणेण ॥

इह दूती द्विधा । तद्यथा-स्वग्रामे, परग्रामे च । तत्र यस्मिन् ग्रामे साधुर्वसति तस्मिन्नेव ग्रामे यदि संदेशककथिका, तर्हि सा स्वग्रामदूती । या तु परग्रामे गत्वा संदेशं कथयति, सा परग्रामदूती । एकैकाऽपि च द्विधा । तद्यथा-प्रकटा, छन्ना च । तत्र सा तव माता, स च तव पिता एवं भणति संदेशं कथयति, सा प्रकटा । या तु तं संदेशं छन्नवचनेन कथयति सा छन्ना ।

एतमेवार्थं च सविशेषं व्यक्तीकरोति-

एक्केक्का वि य दुविहा, पागड छन्ना य छन्न दुविहा उ ।
लोगुत्तरे तत्थेगा, बीया पुण उभयपक्खे वि ॥

इह दूतीसमाचरणमपि दूती, साऽपि चैकैका स्वग्रामविषया, परग्रामविषया च द्विधा । तद्यथा-प्रकटा, छन्ना च । तत्र छन्ना पुनरपि द्विधा । तद्यथा-एका लोकोत्तरे लोकोत्तर एव, द्वितीयसंघाटकसाधोरपि गुप्ता इत्यर्थः । द्वितीया पुनरुभयपक्षेऽपि लोकोत्तरे वा, पार्श्ववर्त्तिनो जनस्य संघाटकसत्कद्वितीयसाधोरपि च गुप्तेति भावः ।

तत्र स्वग्रामपरग्रामविषयां प्रकटां दूतीमाह-

भिक्खाई वच्चंतो, अप्पाहणि नेइ खंतियाईणं ।
सा ते अमुगं माया, सो य पिया ते इमं भणइ ॥

भिक्षाऽऽदौ भिक्षाऽऽदिनिमित्तं चेत्यर्थः, व्रजन् तस्यैव ग्रामस्य सत्के, संघाटकान्तरे परग्रामे वा (खंतियाईणं) जनन्यादीनाम् । (अप्पाहणिं) संदेशं कथयति । यथा सा ते माता अमुकं भणति, स वा ते पिता इदं भणति ।

संप्रति स्वग्रामपरग्रामविषयां लोकोत्तरे छन्नां दूतीमाह-

दूइत्तं खु गरहियं, अप्पाहिउ बिइयपच्चया भणइ ।
अविकोविया सुया ते, जा इह इमं जणस्स खंति ॥

कोऽपि साधुः कस्याश्चित् पुत्रिकाया अप्पाहितः संदिष्टः सन् एवं चिन्तयति-दूतीत्वं खलु गर्हितं, सावद्यत्वात्, तत एवं विचिन्त्य द्वितीयप्रत्ययाद् द्वितीयसंघाटकसाधुर्मा दूतीदोषप्रज्ञासीदित्येवमर्थं भङ्ग्यन्तरेणेदं भणति-यथा अविकोविदा अकुशला जिनशासने सा तव सुता, या इह इदं भणमदीयां खन्तीं जननीमिति । साऽन्यवगतार्थसंदेशका द्वितीयसंघाटकसाधुचित्तरक्षणार्थमेवं भणति-वारयिष्यामि तां निजसुतां येन पुनरेवं न संदिशतीति ।

संप्रति स्वग्रामपरग्रामविषयामुभयपक्षप्रच्छन्नां दूतीमाह-

उभए वि य पच्छन्ना, खंत कहेज्जाहि खंतियाएँ तुमं ।
तं तह संजायं ति य, तहेव अह तं करेज्जासि ॥

उभयस्मिन्नपि च लौकिकलोकोत्तररूपे पक्षे प्रच्छन्ना दूती इत्थं यथा (खंत त्ति) विभक्तिलोपात् खन्तस्य पितुः, अथवा खान्तिकाया जनन्यास्त्वं कथय-यथा तद्विदितं विवक्षितं कार्यं तथैव संजातम् । अथवा-तद् विवक्षितं तथैव कुर्यात् ।

संप्रति प्रकटस्वग्रामदूतीमाश्रित्य दोषान् दृष्टान्तेनोपदर्शयति-

गामाण दोण्ह वेरं, सेज्जायरि धूय तत्थ खंतस्स ।
वहुपरियणस्संतऽन्न-त्थाणं च नाए कए जुज्झं ॥
जामाइपुत्तपइमा-रणं च केई कहिंति जणवाओ ।
जामाइपुत्तपइमा-रणं च खंतेण मे सिट्ठं ॥

विस्तीर्णो नाम ग्रामः, तस्योपकण्ठे गोकुलाभिधो ग्रामः, विस्तीर्णग्रामे च धनदत्तो नाम कुटुम्बी, तस्य भार्या प्रियमती, तस्या दुहिता देवकी, सा च तस्मिन्नेव ग्रामे सुन्दरेण परिणीता, तस्याः

नाम मत्स्यबन्धपुत्रः। चशब्दः समुच्चये। (देवदत्ता य त्ति) देवदत्ता नाम गृहपतिसुता। चः समुच्चये। अञ्जू नाम सार्थवाहसुता। चशब्दः समुच्चये। इति गाथासमासार्थः। विपा० १ श्रु० १ अ०। स०। "न हि दुक्खविवागाहिं,उववण्णाहिं तहिं तहिं। न य जीवो अजीवो उ, कयपुव्वो उ चिंतए ॥१॥" द० प०।

दुहवेयणतर-दुःखवेदनतर-त्रि०। अतिशयेन दुःखवेद्ये,भ०१६ श० २ उ०।

दुहसयविवाग-दुःखशतविपाक-पुं०। दुःखशतरूपे कर्मफले, प्रश्न० ३ आश्र० द्वार।

दुहसिज्जा-दुःखशय्या-स्त्री०। शेरते आस्विति शय्याः, दुःखदाः शय्या दुःशय्याः। पा०।

चत्तारि दुहसेज्जाओ पण्णत्ताओ। तं जहा-तत्थ खलु इमा पढमा दुहसेज्जा-से णं मुंडे भवित्ता अगाराओ अणगारियं पव्वइए निग्गंथे पावयणे संकिए कंखिए वितिगिच्छिए भेयसमावण्णे कलुससमावण्णे निग्गंथं पावयणं णो सद्दहइ,णो पत्तियइ,णो रोएइ, निग्गंथं पावयणं असद्दहमाणे अपत्तियमाणे अरोएमाणे मणं उच्चावचं नियच्छइ, विणिघायमावज्जइ, पढमा दुहसेज्जा। अहावरा दोच्चा दुहसेज्जा-से णं मुंडे भवित्ता अगाराओ अणगारियं पव्वइए,एस णं लाभेणं णो तुस्सइ,परस्स लाभमासाएइ, पीहेइ, पत्थेइ, अभिलसइ, परस्स लाभमासाएमाणे० जाव अभिलसमाणे मणं उच्चावयं ति विणिघायमावज्जइ, दोच्चा दुहसेज्जा। अहावरा तच्चा दुहसेज्जा-से णं मुंडे भवित्ता अगाराओ अणगारियं पव्वइए दिव्वे माणुस्सए कामभोगे आसाएमाणे०जाव अभिलसमाणे मणं उच्चावचं णियच्छइ, विणिघायमावज्जइ, तच्चा दुहसेज्जा। अहावरा चउत्था दुहसेज्जा-से णं मुंडे भवित्ता० जाव पव्वइए, तस्स णमेवं भवइ-जया णं अहमगारवासमावसामि तया णमहं संवाहणपरिमद्दणगाउब्भंगगाउच्छोलणाइं लभामि, जप्पभिइं च णं अहं मुंडे भवित्ता०जाव पव्वइए, तप्पभिइं च णं अहं संवाहण० जाव गाउच्छोलणाइं आसाएमि०जाव अभिलसइ, से णं संवाहण० जाव गाउच्छोलणाइं आसाएमाणे० जाव मणं उच्चावचं नियच्छइ, विणिघायमावज्जइ, चउत्था दुहसेज्जा।

( चत्तारीत्यादि ) चतस्रश्चतुःसंख्या दुःखदाः शय्याः दुःखशय्याः,ताश्च द्रव्यतोऽतथाविधखट्वाऽऽदिरूपाः, भावतस्तु दुःस्थचित्ततया दुःश्रमणस्वभावाः प्रवचनाश्रद्धानपरलाभप्रार्थनकामाऽऽशंसनस्नानाऽऽदिप्रार्थनविशेषिताः प्रक्रान्ताः सूत्रे इति। तासु मध्ये स कश्चिद् गुरुकर्मा, अयार्थो वाऽयम्, स च वाक्योपक्षेपे,प्रवचने शासने,दीर्घत्वं च प्रकृताऽऽदित्वादिति। शङ्कितः एकभावविषयसंशये संयुक्तः, काङ्क्षितो मतान्तरमपि साध्वितिबुद्धिः, विचिकित्सितः फलं प्रति शङ्कावान्, भेदसमापन्नो बुद्धिद्वैधीभावाऽऽपन्नः--एवमिदं सर्वं जिनशासनोक्तम्?, अन्यथा वेति। कलुषसमापन्नो नैतदेवमिति विपर्यस्त इति। न श्रद्धत्ते सामान्येनैवमिदमिति, नो प्रत्येति प्रतिपद्यते प्रीतिद्वारेण,नो रोचयति अभिलाषातिरेकेणाऽऽसेवनाभिमुखनयति। मनोऽश्रमसुच्चावचमसमञ्जसं, निर्गच्छति निर्याति, करोतीत्यर्थः। ततो विनिपातं धर्मभ्रंशं संसारं वा आपद्यते, एवमसौ श्रामण्यशय्यायां दुःखमास्ते इत्येका। तथा केन स्वकीयेन लभ्यते लम्भनं वेति लाभोऽन्नादिस्तस्याऽऽदेर्या,तेन आशां करोत्याशयति-स नूनं मे दास्यतीत्येवमिति। आस्वादयति वा लभते चेत् तद् गृह्णके। एवं स्पृहयति वाञ्छति, प्रार्थयति याचते, अभिलषति लब्धेऽप्यधिकतरं वाञ्छतीत्यर्थः। शेषमुक्तार्थमेवमप्यसौ दुःखमास्ते इति द्वितीया। तृतीया कण्ठ्या। अगारवासो गृहवासस्तमावसामि, तत्र वर्त्ते संवाधनं शरीरस्यास्थिसुखत्वाऽऽदिना नैपुण्येन मर्दनविशेषः, परिमर्दनं तु पृष्ठाऽऽदेर्मर्दनमात्रम्,परिशब्दस्य धात्वर्थमात्रवृत्तित्वात्,गात्राभ्यङ्गस्तैलाऽऽदिनाऽङ्गम्रक्षणं,गात्रोत्क्षालनमङ्गधावनमेतानि लभेत कश्चिन्निषेधयतीति। शेषं कण्ठ्यमिति चतुर्थी। स्था० ४ ठा० ३ उ०। ध०। आचा०।

दुहसेज्जा-दुःखशय्या-स्त्री०। 'दुहसिज्जा' शब्दार्थे, स्था० ४ ठा० ३ उ०।

दुहा-द्विधा-स्त्री०। प्रकारद्वये, आचा० १ श्रु० ३ अ० ३ उ०। ध०। पञ्चा०।

द्विविध-त्रि०। द्वे विधे प्रकारावस्येति द्विविधः। द्विप्रकारे, सूत्र० १ श्रु० ७ अ०।

दुहापडिबद्ध-द्विधाप्रतिबद्ध-त्रि०। ( 'पवज्जा' शब्देऽस्य व्याख्या ) द्विप्रकारेण बद्धे, स्था० ३ ठा० २ उ०।

दुहाव-छिद्-धा०। द्वधा०-उभ०-सक०-अनिट्। द्वैधीकरणे, वाच०। "छिदेर्दुहावणिच्छल्लें"॥ ८।४।१२४॥ इत्यादिना छिदेर्दुहावाऽऽदेशे 'दुहावइ।' प्रा० ४ पाद। छिनत्ति। छिन्ते। अच्छैत्सीत, अच्छित्त। अच्छिदत्। छिद्रा। वाच०।

दुहावह-दुःखावह-त्रि०। दुःखमावहतीति। दुःखोपार्जके, नि०चू०१ उ०। दुःखदायके,उत्त०। "सव्वे कामा दुहावहा।" सर्वे कामाः शब्दाऽऽदयो दुःखाऽऽवहाः मृगाऽऽदीनामिव यतो दुःखावासिहेतुत्वात्मत्सरेर्ष्याविषादाऽऽदिमिश्रित्वाकुलत्वात्--स्वादकत्वान्नरकाऽऽदिहेतुत्वाच्चेति। उत्त० पाइ० १३ अ०। सूत्र०।

दुहावास-दुःखाऽऽवास-पुं०। नरकाऽऽदिषु,सूत्र०१ श्रु०८ अ०।

दुहि ( ण् )-दुःखिन्-पुं०। दुःखयुक्ते, सूत्र० टी० १ श्रु० १ अ० ३ उ०। उत्त०। आ० म०।

दुहिअय-दुःखित-त्रि०। 'स्वार्थे कश्च वा'॥८।२।१६४॥ इति कः। 'दुहिअए, सहियअए।' संजाततदुःखे, प्रा० २ पाद।

दुहिय-दुःखित-त्रि०। दुःखं संजातमस्येति दुःखितः। सञ्जातदुःखे,उत्त० ६ अ०। 'दुक्खिय' शब्दार्थे च। प्रा० २ पाद।

दुहिया-दुहिता-स्त्री०। "स्वस्रादेर्डा"॥८।३।३५॥ इति दुहितृशब्दाद् डाप्रत्ययः, 'दुहियाहि।' प्रा० ३ पाद। दुहितुः पतिः। अलुक्समासः। जामातरि, वाच०। आ० म०।

दुहिल-द्रुहिल-न०। द्रोहस्वभावं द्रुहिलम्।

रएयमार्गक्षेत्रगृहोपाश्रयचैत्यगृहगर्त्तावटिकाऽऽदौ पुरुषाणां चा-क्षुराकारित्वात् तथाऽनयवेश्याकुण्डालीवरिकासुपिरकाऽऽदी-नामप्य। ( स्त्रिय: ) तं०। जिनदासश्रावकस्य भार्यायाम्, सा प्रतिमां प्रतिपन्नस्य स्वपत्युर्देहे लोहकीलकेन व्यथयाञ्चकार। आ० क०।

दुस्सुय-दुःश्रुत-त्रि०। दुष्टं श्रुतं श्रवणं यत्राऽसौ दुःश्रुतः। दु-ष्श्रुते, प्रश्न० २ आश्र० द्वार। दुष्टं श्रुतं दुःश्रुतम्। दुष्टे श्रुते, न०। आचा० १ श्रु० ४ अ० २ उ०।

दुस्सेज्जा-दुःशय्या-स्त्री०। दुःखोत्पादकवसतौ, उ० १ श०६ उ०।

दुह-दुःख-न०। " दुःखदक्षिणतीर्थे वा " ॥ ८। २। ७२ ॥ इति संयुक्तस्य हः। 'दुहं। दुक्खं।' प्रा० २ पाद। नरके, नरकाऽऽवासे, सूत्र० १ श्रु० ५ अ० १ उ०। नरकाऽऽदियातना-स्थाने, सूत्र० १ श्रु० १० अ०। दुःखहेतुत्वादसदनुष्ठाने, अ-सातवेदनीयोदयात् तीव्रपीडाऽऽत्मके असाते, सूत्र० १ श्रु० ५ अ० १ उ०। असातवेदनीयोदये, सूत्र० १ श्रु० ५ अ० १ उ०। पीडायाम्, सूत्र० १ श्रु० ५ अ० १ उ०। शरीरमनसोरननुकूले, आचा० १ श्रु० ३ अ० १ उ०। दुःखोत्पादके च। सूत्र० १ श्रु० १० अ०। " विपुलकक्कमा य गाढा चंडा दुहा तिव्वा दुरहि-यासा।" इति एकार्थाः। विपा० १ श्रु० १ अ०।

दोह-पुं०। दुह-कर्मणि घञ्। दुग्धे, "संदोहश्चाष्टमेऽहनि।" इति स्मृतिः। आधारे घञ्। दोहनपात्रे, वाच०। भावे घञ्। दोहने, गोदोहनस्थाने च। बृ० २ उ०।

दुहअ-दुर्हत-त्रि०। दुष्टं हतो दुर्हतः। दुष्टहते, आचा० १ श्रु० ३ अ० ३ उ०।

द्विहत-त्रि०। द्वाभ्यां रागद्वेषाभ्यां हतो द्विहतः। द्वाभ्यां ह-ते, आचा० १ श्रु० ३ अ० ३ उ०।

दुर्भग-त्रि०। अल्पभाग्ये, प्रा० १ पाद।

दुहओ-द्विधा-अव्य०। प्रकारद्वये, आचा० १ श्रु० ३ अ० ३ उ०। रा०। सूत्र०। उत्त०।

द्विधातस्-अव्य०। द्वयोर्नागयोः, भ० १६ श० ६ उ०। उभ-यत इत्यर्थे च। दशा० १० अ०। आचा०। " दुहओ गुलि-त्ता।" बहिरन्तश्च गोमयाऽऽदिना लिप्ता। रा०। " दुहतो सं-वेल्लियग्गाभिक्खाणं।" द्विधातो द्वयोः पार्श्वयोः संवेल्लितानि अग्राणि यस्य तत् द्विधातः संवेल्लिताग्रं व्यस्तं सामर्थ्याद्व-स्त्रं येन तथा तेषाम्। रा०। चूर्णित, दे० ना० ५ वर्ग।

दुहओणय-द्विधोन्नत-त्रि०। उन्नते, भ० ११ श० ११ उ०। जी०।

दुहओखहा-द्विधाखा-स्त्री०। उभयतोऽङ्कुशाऽऽकारायां श्रेण्या-म्, स्था० ७ ठा०। भ०। नाड्या वामपार्श्वाऽऽदेर्नाड्याः प्रविश्य तयैव गत्वा अस्या एव दक्षिणपार्श्वाऽऽदौ यथोत्पद्यते सा द्वि-धाखा नाडी, बहिर्भूतयोर्वामदक्षिणपार्श्वलक्षणयोर्द्वयोराका-शश्रेण्योस्तया स्पृष्टत्वादिति। भ० २५ श० ३ उ०।

दुहओणंतग-द्विधाऽनन्तक-न०। सर्वाद्धायाम्, स्था० १० ठा०।

दुहओनागासमसप्पओग-द्विधानोकाऽऽशीमाप्रयोग-पुं०। नवे-धा-न-ऽत्तिनश्रक तत्त्विरकाऽर्ये, स्था० १० ठा०। भ०।

दुहओवंका-द्विधावक्रा-स्त्री०। यस्यां वारद्वयं वक्रं कुर्वन्ति सा द्विधावक्रा। इयं चोर्ध्वक्षेत्रादाग्नेयदिशोऽधःक्षेत्रे वायव्यदि-शि गत्वा य उत्पद्यते तस्य भवति। तथाहि-प्रथमसमये आ-ग्नेयात्तिर्यग्नैर्ऋत्यां याति, ततस्तिर्यगेव वायव्यां, ततोऽधो वा-यव्यामेवेति। त्रिसमयेयं त्रसनाड्या मध्ये बहिर्वा भवतीति। भ० २५ श० ३ उ०। श्रेणिभेदे, उभयतो वक्रायां स्थापनायाम्। स्था० ७ ठा०।

दुहट्ट-दुर्घट-त्रि०। दुःस्थगे, उपा० २ अ०। दुरवाप्ये, विपा० १ श्रु० २ अ०।

दुःखाऽऽर्त्त-त्रि०। दुःखपीडिते, ज्ञा० १ श्रु० १ अ०।

दुहट्टिय-दुःखार्तित-त्रि०। दुःखयतीति दुःखं रोगः, तेन आर्त्तः पीडितः क्रियते इति दुःखार्तितः। रोगपीडिते, उत्त० २ अ०।

दुहट्ठ-दुःखार्थ-पुं०। दुःखमेवार्थो यस्मिन् स दुःखार्थः। नरके, सूत्र० १ श्रु० ५ अ० १ उ०।

दुहण-दुघण-पुं०। वृक्षकारे, प्रश्न० ३ आश्र० द्वार। दुघ्नर-विशेषे च। प्रश्न० १ आश्र० द्वार। उपा०।

दोहन-न०। दोहे, प्रश्न० २ आश्र० द्वार।

दुहतोआवत्ता-द्विधातआवृत्ता-स्त्री०। द्वीन्द्रियजीवभेदे, जी० १ प्रति०।

दुहओगपडिणीय-द्विधालोकप्रत्यनीक-पुं०। यौवर्याऽर्थभि-रिन्द्रियार्थसाधनपरे गतिप्रत्यनीके, भ० ८ श० ८ उ०।

दुहव-दुर्भग-त्रि०। " लुंकि दुरो वा " ॥ ८। १। ११५ ॥ इति दुर उपसर्गस्य रेफलोपे सति ऊत्वं वा। प्रा० १ पाद। " कख-घथभाम् " ॥ ८। ४। २४७ ॥ इति भस्य हः। " दुर्भगसुभगे वः" ॥ ८। १। १९२ ॥ इति गस्य वः। 'दुहवो।' 'दूहवो।' प्रा० ढुं० ४ पाद। वाच०। त्रि०। दुष्टं भगं भाग्यं यस्य। अल्पभा-ग्ये, पतिस्नेहशून्यायां स्त्रियाम्, स्त्री०। वाच०।

दुहविमोयणतर-दुःखविमोचनतर-त्रि०। अतिशयेन दुःख-विमोच्ये, भ० १६ श० २ उ०।

दुहविवाग-दुःखविपाक-पुं०। पापकर्मफले, विपा०।

पढमस्स णं भंते! सुयक्खंधस्स दुहविवागाणं समणेणं० जाव संपत्तेणं के अट्ठे पण्णत्ते?। तए णं सुहम्मे अणगारे जंबू अणगारं एवं वयासी-एवं खलु जंबू! समणेणं आ-इगरेणं० जाव संपत्तेणं दुहविवागाणं दस अज्झयणा पण्ण-त्ता-"मियउत्ते, उज्झियए, अभग्गे सगडे, बहस्सई, नंदी। उंबरे, सोरियदत्ते, य देवदत्ता य अंजू य ॥ १ ॥ "

( मियउत्ते इत्यादिगाथा ) तत्र ( मियउत्ते त्ति ) मृगपुत्रा-भिधानराजसुतवक्तव्यताप्रतिबद्धमध्ययनं मृगपुत्र एव। एवं सर्वत्र, नवरम् (उज्झियए त्ति) उज्झितको नाम सार्थवाहपुत्रः, ( अभग्ग त्ति ) सूत्रत्वादभग्नसेनविजयाभिधानचौरसेनापति-पुत्रः। (सगडे त्ति) शकटाभिधानसार्थवाहसुतः। (बहस्सइ त्ति) सूत्रत्वादेव बृहस्पतिदत्तनामा पुरोहितपुत्रः। ( नंदी ति ) सूत्रत्वादेव नन्दिवर्द्धनो राजकुमारः। ( उंबर त्ति ) सूत्रत्वादेव उम्बरदत्तो नाम सार्थवाहसुतः। (सोरियदत्ते त्ति) सौरिकदत्तो

दुवारबाहा-द्वारबाहा-स्त्री० । द्वारभागे, आचा० २ श्रु० १ चू० १ अ० ५ उ० ।

दुवारसाहा-द्वारशाखा-स्त्री० । द्वारपार्श्वस्थकाष्ठाऽऽदौ, आचा० २ श्रु० १ चू० १ अ० ६ उ० ।

दुवारिअ-दौवारिक-पुं० । "उत्सौन्दर्याऽऽदौ" ॥ ८ । १ । १६० ॥ इति औत उत् । 'दुवारिओ ।' प्रा० १ पाद ।

दौवारिक-पुं० । द्वारे नियुक्तः, ठक् । द्वारपाले, वाच० ।

दुवालसावत्त-द्वादशाऽऽवर्त-न० । "दुवालसावत्ते कितिकम्मे पण्णत्ते । तं जहा-'दुओणयं जहाजायं, कितिकम्मं बारसावयं । चउसिरं तिगुत्तं दुपवेसं एगनिक्खमणं ॥१॥" इति सूत्रप्रतिपादितेषु कायव्यापारविशेषेषु, स० १ सम० ।

दुविट्ठु-द्विपृष्ठ-पुं० । द्वितीये वासुदेवे, ति० । नवमे भविष्यति वासुदेवे, स० । ती० ।

दुविह-द्विविध-त्रि० । "द्विन्योरुत्" ॥ ८ । १ । ९४ ॥ इति द्विशब्दे इकारस्योत्कारः । 'दुविहो ।' प्रा०१ पाद । द्वे विधे प्रकारावस्येति द्विविधः । आचा० १ श्रु० ७ अ० ८ उ० । द्विप्रकारे, सूत्र० १ श्रु० ८ अ० । आचा० । निशी० । उत्त० । स्था० । प्रश्न० ।

दुविहजूविपत्त-द्विविधजूमिप्राप्त-त्रि० । वयः ( व्यञ्जनजातत्वाऽऽदि )श्रुतपर्याय ( यावत्पर्यायस्य यच्छ्रुतं दीयते ) रूपश्रुतवाचनायोग्यतां प्राप्ते, नि० चू० १९ उ० ।

दुव्वण्ण-दुर्वर्ण-न० । अशुभवर्णे, नि०चू० । "पंचवण्णोवत्थं दुव्वण्णं ।" एकस्मिन्नपि पततीत्यर्थः । "अहवा-मयाणसकुरसंलित्तं सुवण्णं, सेसा सव्वे दुव्वण्णा ।" अनिष्टा इत्यर्थः । नि०चू०१ उ० । भ० । कुरूपे च । त्रि० । सूत्र० २ श्रु० २ अ० ।

दुव्वय-दुर्व्रत-त्रि० । असम्यग्व्रते, स्था० ४ ठा० ३ उ० । दुष्टानि व्रतानि येषां ते तथा । यथा मांसभक्षणं, व्रतकालसमाप्तौ प्रभूततरसत्त्वोपघातेन मांसप्रदानम्, अन्यदपि नक्तभोजनाऽऽदिकं दुष्टव्रतमिति । तथाऽन्यस्मिन् जन्मान्तरे मधुमद्यमांसाऽऽदिकमभक्ष्यं परिहरिष्यामीत्येवमज्ञानान्धा जन्मान्तरविषयविरोधं सांनिदानमेव व्रतं गृह्णन्ति । सूत्र० २ श्रु० २ अ० । व्रतवर्जिते, विपा० १ श्रु० १ अ० । दशा० ।

दुव्वलचारित्त-दुर्बलचारित्र-पुं० । दुर्बलमचारित्रं इति दुर्बलचारित्रः । विना कारणेन मूलोत्तरगुणपरिसेवाणि, नि० चू० १ उ० । व्य० ।

दुव्वसुमुणि-दुर्वसुमुनि-पुं० । मोक्षगमनायोग्ये, आचा० ।

दुव्वसुमुणी अणाणाए तुच्छए गिलाइ वत्तए, एस वीरे पसंसिए ( १०० )

(दुव्वसु इत्यादि) वसु द्रव्यम्, तच्च भव्यत्वेऽर्थे व्युत्पादितं.द्रव्यं च भव्य इत्यनेन । भव्यश्च मुक्तिगमनयोग्यः, ततश्च मुक्तिगमनयोग्यं यद् द्रव्यं तद् वसु, दुष्टं वसु दुर्वसु,दुर्वसु चासौ मुनिश्च दुर्वसुमुनिः-मोक्षगमनायोग्यः । स च कुतो भवति?, अनाज्ञया तीर्थकरोपदेशशून्यः,स्वैरीत्यर्थः । किमत्र तीर्थकरोपदेशो दुष्करं, येन स्वैरित्वमभ्युपगम्यते ? । तदुच्यते-उद्देशकाऽऽदेरारभ्य सर्वं यथासंभवमायोज्यम । तथाहि-मिथ्यात्वमोहितं लोकं सम्यग्दुष्करत्वेन ज्ञानमध्यारोपयितुं,रत्यरती निग्रहीतुं,शब्दाऽऽदिविषयोऽव्यष्टानेषु माध्यस्थ्यं भावयितुं,प्राणातिपाताणि लोकुम्,एवं यथोद्दिष्टया मौनीन्द्राज्ञया असिधारकल्पया दुष्करं सञ्चरितुम, अनुकूलप्रतिकूलांश्च नानाप्रकारानुपसर्गान् सोढुम । असहने च कर्मोदयोऽनागतीतकालसुखभावना च कारणं,जीवो हि स्वभावतो दुःखभीरुरनिरोधसुखप्रियोऽतो निरोधकल्पायामाज्ञायां दुःखं वसति । अयमंशश्च किंभूतो भवतीत्याह-(तुच्छए इत्यादि) तुच्छो रिक्तः,स च द्रव्यतो निर्धनः, घटाऽऽदिरिव जलाऽऽदिरहितो,भावतो ज्ञानाऽऽदिरहितः । ज्ञानाऽऽदिरहितो हि कश्चित्संशयितविषये केनचित्पृष्टोऽपरिज्ञानात् ग्लायति वक्तुं, ज्ञानसमन्वितो वा चारित्ररिक्तः पूजासत्कारभयाद्धुरुमार्गप्ररूपणावसरे ग्लायति यथावस्थितं प्रज्ञापयितुम । तथाहि-प्रवृत्तसंनिधिः संनिधानदोषतामाचष्टे । एवमन्यत्रापीति । यस्तु कथायमहाविषमरकलनगवदाङ्गोपजीवकः स सुवसुमुनिर्भवत्यरिक्तो न ग्लायति च वक्तुम, यथावस्थितवस्तुपरिज्ञानादनुष्ठानात् । आह च-(एस इत्यादि) एष इति सुवसुमुनिर्ज्ञानाऽऽद्यरिक्तो यथावस्थितमार्गप्ररूपको वीरः कर्मविदारणात, प्रशंसितस्तद्विद्भिः श्लाघित इति । आचा० १ श्रु० २ अ० ६ उ० ।

दुव्वह-दुर्वह-त्रि० । वोढुमशक्ये, उत्त० १९ अ० ।

दुव्वाइ-दुर्वाक्-पुं० । अप्रियवक्तार, दश० २ अ० ।

दुव्विअड्ढ-दुर्विदग्ध-पुं० । ज्ञानलवगर्वाङ्कुरे, जीवा० २० अधि० । पण्डितम्मन्ये, स्था० ।

दुव्विअड्ढा-दुर्विदग्धा-स्त्री० । मिथ्याऽहङ्कारविडम्बितायां पर्षदि, नं० ।

दुव्विचिंतिय-दुर्विचिन्तित-पुं० । दुष्टो विचिन्तितो दुर्विचिन्तितः । चर्याच्चतया अशुभे विचिन्तिते, "जं थिरमज्झवसाणं, तं झाणं जं चलं तयं चित्तं ।" इति वचनात् । ध०२ अधि० ।

दुव्विजाण-दुर्विज्ञ-त्रि० । दुर्विज्ञानरि, प्रश्न०१ आश्र०द्वार ।

दुव्विण्णाय-दुर्विज्ञात-त्रि० । दुष्टं विज्ञातं दुर्विज्ञातम । दुष्टे विज्ञाते, आचा० १ श्रु० ९ अ० ४ उ० ।

दुव्विणीय-दुर्विनीत-त्रि० । दुर्विनययुक्ते, प्रश्न० ३ आश्र० द्वार । आव० । आ० म० ।

दुव्विदड्ढ-दुर्विदग्ध-पुं० । 'दुव्विअड्ढ' शब्दार्थे, जीवा०२०अधि० ।

दुव्विदद्ध-दुर्विदग्ध-पुं० । 'दुव्विअड्ढ' शब्दार्थे, जीवा० २० अधि० ।

दुव्विदड्ढबुद्धि-दुर्विदग्धबुद्धि-पुं० । स्वामिप्रायेणाऽऽगमानुसारिणि, दर्श० ६ तत्त्व ।

दुव्विभज-दुर्विभज-त्रि० । कष्टविभजनीये, "मज्झिमगाणं दुव्विभजं दुग्गमं भवइ ।" आख्यातेऽपि तत्र दुर्विभजं कष्टविभजनीयम, ऋजुजडत्वादेव तद्वत्वनीति । दुःशकं शिष्याणां वस्तुतत्त्वस्य विभागेनावस्थापनमित्यर्थः । दुर्विभवमित्यत्र पाठान्तरे दुर्विज्ञेयम्, दुःशका विभावना कर्तुं तस्येत्यर्थः । स्था० ५ ठा० १ उ० ।

दुव्विभाव-दुर्विभाव-त्रि० । दुर्लक्ष्ये, विशे० ।

दुव्वियड-दुर्विवृत-त्रि० । दुष्टविवृतो दुर्विवृतः । परिधानवर्जिते, स्था० ५ ठा० १ उ० ।

णाणादंसणसिद्धा, ते सव्वे चेव होइ तवो ॥ २५ ॥

एवमादिदेवताः प्रतीत्यैतदाराधनयेत्यर्थः । ( अवक्कसग त्ति ) अपवसनानि अवजोपणानि वा । तुः पूरणे । ये चित्रा नानादेशप्रसिद्धास्ते सर्वे चैव भवन्ति तप इति स्फुटमिति । तत्र रोहिणीतपो रोहिणीनक्षत्रदिनोपवासः सप्तमासाधिकसप्तवर्षाणि यावत् । तत्र च वासुपूज्यजिनप्रतिमाप्रतिष्ठा पूजा च विधेयेति । तथा अम्बा ( अम्बा ) तपः पञ्चसु पञ्चमीष्वेकाशनाऽऽदि विधेयम् । नेमिनाथाम्बिकापूजा चेति । तथा श्रुतदेवतातप एकादशस्वेकादशीषूपवासो मौनव्रतं श्रुतदेवतापूजा चेति । शेषाणि तु रूढितोऽवसेयानीति गाथार्थः ॥ २५ ॥

अथ कथं देवतोद्देशेन विधीयमानं यथोक्तं तपः स्यादित्याशङ्क्याऽऽह-

जत्थ कसायणिरोहो, बंभं जिणपूयणं अणसणं च ।

सो सव्वो चेव तवो, विसेसओ मुद्धलोयम्मि ॥ २६ ॥

यत्र तपसि कषायनिरोधो ब्रह्म जिनपूजनमिति व्यक्तम् । अनशनं च भोजनत्यागः । ( सो त्ति ) तत्सर्वं भवति तपो विशेषतः मुग्धलोके । मुग्धलोको हि तथा प्रथमतया प्रवृत्तः सन्सज्ज्यासात्कर्मक्षयोद्देशेनापि प्रवर्त्तते, न पुनरादित एव तदर्थं प्रवर्त्तितुं शक्नोति, मुग्धत्वादेवेति । स्वबुद्धयस्तु मोक्षार्थमेव विहितमिदमिति बुद्ध्यैव वा तपस्यन्ति । यदाह-" मोक्षायैव तु घटते, विशिष्टमतिरुत्तमः पुरुषः । " इति । मोक्षार्थघटना चाऽऽगमविधिनैव । आलम्बनान्तरस्यानाभोगहेतुत्वादिति गाथार्थः ॥ २६ ॥

न चेदं देवतोद्देशेन तपः सर्वथा निष्फलमैहिकफलमेव वा, चरणहेतुत्वादपीति चरणहेतुत्वमस्य दर्शयन्नाह-

एवं पडिवत्तीए, एत्तो मग्गाणुसारिभावाओ ।

चरणं विहियं बहवो, पत्ता जीवा महाभागा ॥ २७ ॥

एवमित्युक्तानां साधर्मिकदेवतानां कुशलानुष्ठानेषु निरुपसर्गत्वाऽऽदिहेतुना, प्रतिपत्त्या तपोरूपोपचारेण; तथा इत उक्तरूपात्कषायाऽऽदिनिरोधप्रधानात्तपसः पाठान्तरेण-एवमुक्तकरणेन मार्गानुसारिभावात् सिद्धिपथानुकूलाध्यवसायाच्चरणं चारित्रम्, विहितमाप्तोपदिष्टं, बहवः प्रभूताः, प्राप्ता अधिगताः, जीवाः सत्त्वाः, महाभागाः महानुभावा इति गाथार्थः ॥२७॥

तथा-

सव्वंगसुंदरो तह, णिरुजसिहो परमभूसणो चेव ।

आयइजणगो सोहग्ग-कप्परुक्खो तहऽण्णो वि ॥२८॥

पढिओ तवोविसेसो, अण्णेहिँ वि तेहि तेहिँ सत्थेहिं ।

मग्गपडिवत्तिहेउं, हंदि विणेयाणुगुण्णेणं ॥ २९ ॥

सर्वाङ्गानि सुन्दराणि यतस्तपोविशेषात्स सर्वाङ्गसुन्दरः । तथेति समुच्चये । रुजानां रोगाणामभावो निरुजं, तदेव शिखेव शिखा प्रधानं फलतया यत्राऽसौ निरुजशिखः । तथा परमाण्युत्तमानि भूषणान्याभरणानि यतोऽसौ परमभूषणः । चैवेति समुच्चये । तथा आयतौ आगामिकालेऽभीष्टफलं जनयति करोति योऽसावायतिजनकः । तथा-सौभाग्यस्य सुभगतायाः संपादने कल्पवृक्ष इव यः स सौभाग्यकल्पवृक्षः । तथेति समुच्चये । अन्योऽप्यपरोऽपि उक्ततपोविशेषात् ॥ २८ ॥ किमित्याह-पठितोऽधीतस्तपोविशेषस्तपोभेदः,अन्यैरपि ग्रन्थकारैः, तेषु तेषु शास्त्रेषु, नानाग्रन्थेष्वित्यर्थः । नन्वयं पठितोऽपि साभिष्वङ्गत्वान्न मुक्तिमार्ग इत्याशङ्क्याऽऽह-मार्गप्रतिपत्तिहेतुः शिवपथाऽऽश्रयणकारणम् । यश्च तत्प्रतिपत्तिहेतुः स मार्ग एवोपचारात्, कथमिदमिति चेदुच्यते-हन्दीत्युपप्रदर्शने । विनेयानुगुण्येन शिक्षणीयसत्त्वानुरूप्येण भवन्ति हि केचित्ते विनेया ये साभिष्वङ्गानुष्ठानप्रवृत्ताः सन्तो निरभिष्वङ्गमनुष्ठानं लभन्त इति गाथाद्वयार्थः ॥ २९ ॥ पञ्चा० १९ विव० ।

अथैते तपोविशेषा आगमे नोपलभ्यन्त इत्याशङ्कां परिहरन्नाह-

चित्तं चित्तपयजुयं, जिणिंदवयणं असेससत्तहियं ।

परिसुद्धमेत्थ किं तं, जं जीवाणं हियं णऽत्थि ॥३०॥

चित्रमद्भुतमनेकातिशयाभिधानत्वाद्ज्ञानक्षाऽऽदिभेदत्वाद्वा चित्रमनेकविधम् । तथा चित्रपदयुतं नानाविधार्थप्रतिपादकाभिधानयुक्तम्, जिनेन्द्रवचनं जिनेश्वराऽऽगमः, अशेषसत्त्वहितं समस्तप्राण्युपकारकं,भव्यानुसारेण मार्गप्रतिपत्त्युपायप्रतिपादनपरत्वात् । परिशुद्धं कषच्छेदतापविशुद्धं सुवर्णमिव निर्दोषम् । एवं चात्रास्मिन् जिनवचने किं तद्यज्जीवानां हितं नास्ति ?, सर्वमपि जीवानां हितमस्तीत्यत इदं तपः परिदृश्यमानाऽऽगमेऽनुपलभ्यमानमप्युपलब्धमिवावगन्तव्यं, तथाविधजनहितत्वादिति गाथार्थः ॥ ३० ॥

तथा-

सव्वगुणपसाहणओ णेओ तिहिँ अट्ठमेहिँ परिसुद्धो ।

दंसणणाणचरित्ता-ण एस रेसिम्मि सुपसत्थो ॥ ४० ॥

सर्वगुणप्रसाधनः सकलगुणाऽऽवह इति पर्यायस्तपोविशेषः । 'णो' निपातः पूरणार्थः । ज्ञेयोऽवसेयः,त्रिभिरष्टमैरुपवासत्रयलक्षणैः, परिशुद्धोऽनवद्यः, दर्शनज्ञानचरित्राणां प्रतीतानाम्, एषोऽयम् । ( रेसिम्मि त्ति ) निमित्तं, सुप्रशस्तोऽतिशययुक्तः । तत्रैकमष्टमं दर्शनगुणशुद्धये, एवमपरद्वयं द्वयपरिशुद्धये इति गाथार्थः ॥ ४० ॥

अथ सर्वाङ्गसुन्दराऽऽदितपस्सु सनिदान एव प्राणी प्रवर्त्तते, ततो न न्याय्यान्येतानीत्याशङ्कापरिहारार्थमनिदानतामेषु प्रवृत्तस्य दर्शयन्नाह-

एएसु वट्टमाणो, भावपवित्तीएँ बीयभावाओ ।

सुद्धाऽऽसयजोगेणं, अणियाणो भवविरागाओ ॥४१॥

एतेष्वनन्तरोक्ततपस्सु प्रवर्तमानो व्याप्रियमाणो जीवः । " एतेसु बहुमाणा " इति पाठान्तरं, व्यक्तं च । कया ?, भावप्रवृत्त्या बहुमानसारक्रियया, अनिदान इति योगः । कुत इत्याह-बीजभावात् बोधिबीजविकलस्य देहिनो बोधिबीजजननेन । एतदेव कथमित्याह-शुद्धाऽऽशययोगेन शुभाध्यवसायसंबन्धेन । शुभाध्यवसायाद्धि बोधिबीजं स्यात् । अनिदानो निदानरहितः स्यात् । तथा-भवविरागात्संसारनिर्वेदाद्यात्किल भवविरागाऽऽदिनिमित्तं तन्निदानं न भवति बोध्यादिप्रार्थनमिव, भवविरागाऽऽदिहेतवश्चोक्ततपांसि केषाञ्चिदतो निर्निदानानि, इति गाथार्थः ॥ ४१ ॥

निर्निदानत्वादेवैतेषां निर्वाणाङ्गतामाचार्यान्तरमतेनाऽपि दर्शयन्नाह-

विसयसरूवऽणुबंधे-हिँ तह य सुद्धं जओ अणुट्ठाणं ।

णिव्वाणंगं भणियं, अण्णेहि वि जोगमग्गम्मि ॥ ४२ ॥

न्तराभिधानायाऽऽह-सर्व एव चेत्यादि श्लोकद्वयम्। अथवा दुःखाऽऽत्मकं तपः केचिन्मन्यन्ते कर्मोदयस्वरूपत्वाद् बलीवर्दाऽऽदिशब्देन विशेषितत्वाद् दृष्टान्तस्येति सद्धेतुरेवायं वृक्षोऽयं, शाखाऽऽदिमत्त्वात्, आम्रवृक्षवदित्यादिवदिति । अत्राऽऽचार्य आह-तन्न युक्तिमदिति । कुत इत्याह--सर्व एव चेत्यादि श्लोकद्वयम् । इह चशब्दो यस्मादर्थे द्रष्टव्यः । आचार्य एवोभयत्र पक्षोपदेशमाह-युक्त्यागमेत्यादि । इदमिति तपसो दुःखाऽऽत्मकत्वमननं, शेषं तु श्लोकचतुष्टयं पूर्ववदेव, नवरं "मनइन्द्रिययोगानामहानिश्चोदिता जिनैः," इत्यत्र चशब्दः पूर्वोक्तयुक्त्यपेक्षया युक्त्यन्तरसमुच्चयार्थो द्रष्टव्य इति ॥ ८ ॥ हा० ११ अष्ट० ।

तपश्चान्द्रायणं कृच्छ्रं, मृत्युघ्नं पापसूदनम् ।
आदिधार्मिकयोग्यं स्या-दपि लौकिकमुत्तमम् ॥१७॥

तप इति । लौकिकमपि लोकसिद्धमपि, अपिर्लोकोत्तरं समुच्चिनोति, उत्तमं स्वभूमिकोचितशुभाध्यवसायपोषकम् । द्वा० १२ द्वा० । यो० विं० ।

ज्ञानसारीयं तपोऽष्टकम्-

ज्ञानमेव बुधाः प्राहुः, कर्मणां तापनात्तपः ।
तदाभ्यन्तरमेवेष्टं,बाह्यं तदुपबृंहकम् ॥ १ ॥
आनुस्रोतसिकी वृत्ति-र्बालानां सुखशीलता ।
प्रातिस्रोतसिकी वृत्ति-र्ज्ञानिनां परमं तपः ॥ २ ॥
धनार्थिनां यथा नास्ति, शीततापाऽऽदि दुःसहम् ।
तथा भवविरक्तानां, तत्त्वज्ञानार्थिनामपि ॥ ३ ॥
सदुपायप्रवृत्ताना-मुपेयमधुरत्वतः ।
ज्ञानिनां नित्यमानन्द-वृद्धिरेव तपस्विनाम् ॥ ४ ॥
इत्थं च दुःखरूपत्वा-त्तपो व्यर्थमितीच्छताम् ।
बौद्धानां निहता बुद्धि-र्बौद्धाऽऽनन्दाऽपरिक्षयात् ॥५॥
यत्र ब्रह्म जिनार्चा च, कषायाणां तथा हतिः ।
सानुबन्धा जिनाऽऽज्ञा च, तत्तपः शुद्धमिष्यते ॥ ६ ॥
तदेव हि तपः कार्यं, दुर्ध्यानं यत्र नो भवेत् ।
येन योगा न हीयन्ते, क्षीयन्ते नेन्द्रियाणि वा ॥ ७ ॥
मूलोत्तरगुणश्रेणि-प्राज्यसाम्राज्यसिद्धये ।
बाह्यमाभ्यन्तरं चेत्थं, तपः कुर्यान्महामुनिः ॥ ८ ॥ अष्ट० ३१ अष्ट० ।

('भिक्खाग' शब्दे तेषां चतुर्विधं तपो वक्ष्यते) (कियताऽनशनेन कियती निर्जरा भवतीति 'अणसण' शब्दे प्रथमभागे ४४४ पृष्ठे द्रष्टव्या )

प्रकीर्णकतपांसि-

एसो बारसभेओ, सुत्तनिबद्धो तवो मुणेयव्वो ।
एयविसेसो उ इमो, पइण्णगोऽणेगभेउ त्ति ॥ ४ ॥

इह तपःशब्दस्य प्राकृतत्वेन पुल्लिङ्गनिर्देशः । एतदनन्तरोक्तं द्वादशभेदमुक्तभेदानां मीलनत्वात्। सूत्रनिबद्धं शासनोक्तम्, तपस्तपस्या ( मुणेयव्वो त्ति ) ज्ञातव्यम् । एतद्विशेषस्तु अनन्तरोक्ततपोभेद एव ( इमो त्ति ) इदं वक्ष्यमाणं तपः प्रकीर्णकं व्यक्तितः सूत्रानिबद्धम्, न भिक्षुप्रतिमाऽऽदिवत्सूत्रे निबद्धमित्यर्थः । न चोत्सूत्रत्वमस्य, द्वादशभेदतपस्यन्तर्भावात् । तथाऽनेकभेदमनेकविधाऽऽलम्बनत्वात् । इतिशब्दः समाप्तौ । इति गाथाऽर्थः ॥ ४ ॥

प्रकीर्णकमेव तपो दर्शयन्नाह--

तित्थयरणिग्गमाई, सव्वगुणपसाहणं तवो होइ ।
भव्वाण हिओ णियमा, विसेसओ पढमठाणीणं ॥५॥

तीर्थकरनिर्गमाऽऽदि येन तपसा तीर्थकरा निष्क्रान्ताः; आदिशब्दात्तीर्थकरज्ञाननिर्वाणाऽऽदिग्रहः। किंभूतमिदमित्याह-सर्वगुणसाधकं तीर्थकरनिर्गमनाऽऽद्यालम्बनस्य शुभभावप्रकर्षरूपत्वेन ऐहलौकिकाऽऽद्युपकारकारित्वात् । तपो भवतीति व्यक्तम् । अत एव भव्यानां हितं नियमादिति व्यक्तम् । विशेषतः पुनः प्रथमस्थानिनामव्युत्पन्नबुद्धीनां हितत्वादेव निरालम्बनतयाऽपि शुभभावप्रकर्षसंभवात् सर्वमपि हितमेवेति गाथाऽर्थः ॥ ५ ॥ पञ्चा० १९ विव० ।

चान्द्रायणाऽऽदितपः-

चंदायणाइ य तहा, अणुलोमविलोमओ तवो अवरो ।
भिक्खाकवलाण पुढो, विन्नेओ वुड्ढिहाणीहिं ॥ १८ ॥

चन्द्रायणमिव चन्द्रायणं, तदादि च, आदिशब्दाद्भद्रामहाभद्रासर्वतोभद्रारत्नावलीकनकावलीकावलीसिंहनिष्क्रीडितद्वयाऽऽचाम्लवर्द्धमानगुणरत्नसंवत्सरसप्तसप्तमिकाऽऽदिचतुष्टयकल्याणकाऽऽदितपसामागमप्रसिद्धानां ग्रहः। तथेति वाक्यान्तरोपक्षेपार्थो गाथाऽऽदौ द्रष्टव्यः । अनुलोमविलोमतो गतप्रत्यागत्या, तपोऽपरमन्यत् । कथम्?, भिक्षाकवलानां प्रतीतानां, पृथग्भेदेन, विज्ञेयो ज्ञेयो वृद्धिहानिभ्यामिति गाथाऽर्थः ॥ १८ ॥ पञ्चा० १९ विव० ।

रोहिण्यादितपः-

अन्नं पि अत्थि चित्तं, तहा तहा देवयाणिओएण ।
मुद्धजणाण हिओ खलु, रोहिणिमाई मुणेयव्वो ॥२३॥

अन्यदपि, अस्ति विद्यते, चित्रम्, तप इति गम्यते । तथा तथा तेन तेन प्रकारेण लोकरूढेन, देवतानियोगेन देवतोद्देशेन मुग्धजनानामव्युत्पन्नबुद्धिलोकानां, हितं खलु पथ्यमेव, विषयाभ्यासरूपत्वात् । रोहिण्यादिदेवतोद्देशेन यत्तद्रोहिण्यादि । (मुणेयव्वो त्ति) ज्ञातव्यम् । पुंल्लिङ्गता च सर्वत्र प्राकृतत्वादिति गाथाऽर्थः ॥ २३ ॥

देवता एव दर्शयन्नाह--

रोहिणि अंबा य तहा, मंदउण्णिया सव्वसंपयासोक्खा ।
सुयसंतिसुरा काली, सिद्धाईया तहा चेव ॥ २४ ॥

रोहिणी १ अम्बा २, तथा मन्दपुण्यिका ३, ( सव्वसंपयासोक्ख त्ति ) सर्वसंपत् ४, सर्वसौख्या चेत्यर्थः ५ । (सुयसंतिसुर त्ति ) श्रुतदेवता ६, शान्तिदेवता चेत्यर्थः ७ । "सुयदेवयसंतिसुरा" इति वा पाठान्तरम् , व्यक्तं च । काली ८, सिद्धायिका ९, इत्येता नव देवताः। तथा चैवेति समुच्चयार्थः। "संबाइया चेव" त्ति पाठान्तरमिति गाथाऽर्थः ॥ २४ ॥

ततः किमित्याह-

एमाइदेवयाओ, पडुच्च अवऊसगा उ जे चित्ता ।

तथा—

" ता जह न देहपीला, न यावि चुयमंससोणियत्तं तु ।
जह धम्मज्झाणवुड्ढी, तहा इमं होइ कायव्वं ॥ १ ॥ "

तदिति तस्मात्कारणात्, कथं केन प्रकारेण?, न कथञ्चिदित्यर्थः। नु इति वितर्के, अस्य तपसः युक्ता उपपन्ना, स्यात् भवेत्, दुःखरूपता असुखस्वभावता। तदेवं दुःखाऽऽत्मकत्वं तपसोऽसिद्धं, तदसिद्धावयुक्तिमत्त्वमप्यसिद्धमित्युक्तमिति ॥ ५ ॥

ननु देहपीडाकरत्वेनाऽनशनाऽऽदीनां दुःखरूपत्व-
मनुभूयमानमपि कथमसिद्धमिति व्यपदिश्य-
त इत्याह-

याऽपि चानशनाऽऽदिभ्यः, कायपीडा मनाक् क्वचित् ।
व्याधिक्रियासमा साऽपि, नेष्टसिद्ध्याऽत्र बाधिनी ॥ ६ ॥

(याऽपीति) अनशनाऽऽदिभ्य उक्तन्यायेन तावद् देहपीडा न भवत्येव, याऽपि चानशनाऽऽदिभ्य उपवासाऽऽदिभ्यः, आदिशब्दादूनोदरताऽऽदेः सकाशात्, कायपीडा शरीरबाधना, न तु मनःपीडा, मनाक् स्वल्पा, क्वचिद्देशे काले वा, न पुनः सर्वत्र सर्वदा सा संभवति। उक्तन्यायप्रवृत्तस्य साऽपीति इह दृश्यते नासावपि न बाधनी, न वा बाधिका, न मनसो दुःखदा। किमित्यत आह-इष्टसिद्ध्या वाञ्छितार्थसाधनात्, अत्र प्रवचने, किंविधाऽसावित्याह-व्याधिक्रियासमा रोगचिकित्सातुल्या। यथा हि रोगचिकित्सायां मनाक् देहस्य पीडा सत्यपि न बाधिका, आरोग्यसिद्धेः, एवं तपस्यपि देहपीडाभावाऽऽरोग्यसंसिद्धेर्भावतो बाधिकेति भावनेति ॥ ६ ॥

इष्टार्थसिद्धौ देहपीडाया अदुःखरूपतां दृष्टान्तेन समर्थयन्नाह-

दृष्टा चेष्टार्थसंसिद्धौ, कायपीडा ह्यदुःखदा ।
रत्नाऽऽदिवणिगादीनां, तद्वदत्रापि ज्ञायताम् ॥ ७ ॥

न केवलमस्माभिरेवेहोपन्यस्ता, दृष्टा च लोके अवलोकिता, इष्टार्थसंसिद्धावभिप्रेतप्रयोजनप्राप्तौ सत्यां, कायपीडा देहबाधा, हिशब्दः स्फुटार्थः, अदुःखदा न पीडाकारिणी, केषामित्याह-रत्नानि मरकताऽऽदीनि, आदिर्येषां वस्त्रसुवर्णाऽऽदीनां तानि तथा तेषां, वणिग् वाणिजको रत्नाऽऽदिवणिक्, स आदिर्येषां कृषीवलाऽऽदीनां ते तथा तेषां, रत्नाऽऽदिवणिगादीनाम्। ततः किमित्याह-तेषामिव वणिगादीनामिव तद्वत्, अत्रापि अनशनाऽऽदितपोविषयेऽपि ज्ञायतां निपुणधिया पर्यालोच्यताम्। तथाहि-रत्नसुवर्णवस्त्राऽऽदिवणिक्कृषीवलाऽऽदीनां समीहितार्थसंसिद्धिबद्धाभिप्रायाणाम् अपारपारावारावतारकान्तारनिस्तरणधरणीकर्षणाऽऽदिविविधव्यापारपरायणानां क्षुत्पिपासा-श्रमाऽऽदिजनितदेहपीडा न मनोविधुरताऽऽधायिनी; एवं साधूनामपारसंसारसागरमाहिरणोत्तीर्णानामनशनोनोदरताऽऽदितपोजनितदेहपीडा न मनोबाधाविधायिनीति ॥

इह पुनर्विशेषसम्प्रदायं केचिदमूचुः-

किल कोऽपि दरिद्रवणिजको दूरदेशान्तरं गत्वा कथं कथमपि रत्नान्युपार्जितवान्, चिन्तितवांश्च-कथमहमेतानि महामूल्यानि सर्वाऽऽशासम्पादकानि महारत्नानि चौरव्याकुलमरण्यं निस्तीर्य स्वनगरं गत्वोपभोगं नेष्यामि?। ततस्तेनोत्पन्नबुद्धिना तान्येकत्र स्थाने निहितानि, काचाऽऽदिशकलानि च पोट्टलिकायां बद्धानि। सा च दण्डाग्रे निबद्धा। ततश्चोरपल्लीमध्येनाऽहो! रत्नवणिजको गच्छतीत्येवं महता शब्देन व्याहरन्नरण्यमतिक्रामति स्म। ततो मार्गे पल्लीषु च ये जनाः, ते तं वीक्ष्य ससंभ्रममागत्य निभालयन्ति स्म। अपश्यंश्च काचाऽऽदिशकलानि, अवधीरितवन्तश्च ग्रहगृहीतोऽयमिति विभावयन्तः। ततः पुनरपि तथैव निवृत्तः, तत्रापि यैः पूर्वं न वीक्षित आसीत्, ते तथैव वीक्षितवन्तोऽथावधीरितवन्तश्च। एवं पुनरपि अस्मादरण्यमध्येन गतवान्। ततस्तृतीयवेलायामतिपरिचितत्वादवधीरितस्तस्करजनेन। ततोऽसौ निश्चितवान्-न मां कोऽपि अत्राऽरण्यमार्गे स्खलयिष्यति। इति निश्चित्य रत्नानि गृहीत्वा शीघ्रं तदुपभोगाय वाञ्छितपुरप्रासादरमणीयाङ्गनाग्रहणे चातीवोत्सुकतयाऽनवरतं महाप्रयाणकैः क्षुत्पिपासाश्रमाऽऽदीन् अचिन्तयन्नरण्यमगणयन् गन्तुं प्रवृत्तः। बहुतरमार्गमतिलङ्घितः सन् पिपासाऽभिभूतो भावयामास-अहो! अहमद्य जलं विना म्रिये, न च रत्नोपभोगभाजनं भवामीत्येवं भावयता मरणभयभीतेन रत्नोपभोगाऽऽकाङ्क्षिणा दृष्टं सरः पङ्कप्रायपानीयं पङ्कमग्नमृगाऽऽदिकडेवरपूयकृमिजालव्याकुलं विलीनमतिदुर्गन्धं विरसतुच्छजलम्। दृष्ट्वा च गन्धमजिघ्रता रसमनास्वादयता दुष्करकरणं कृत्वा अक्षिणी निमील्याऽञ्जलिभिस्तत् पीतवान्, परं स्वास्थ्यं नागमत्, तदुपष्टम्भितश्च क्षीणपिपासादुःखोत्कर्षणपुरं प्राप्तः, रत्नोपयोगसुखं चेति। उपनयस्तु प्रागुक्त एवेति ॥ ७ ॥

तदेवं दुःखाऽऽत्मकतां तपसो व्युदस्य कर्मोदय-
स्वरूपतां व्युदस्यन्नाह-

विशिष्टज्ञानसंवेग-शमसारमतस्तपः ।
क्षायोपशमिकं ज्ञेय-मव्याबाधसुखाऽऽत्मकम् ॥ ८ ॥

विशिष्टाः प्रधानाः सम्यग्दर्शनविशेषितत्वात्-ज्ञानं च तत्त्वसंवेदनं, संवेगश्च संसारभयं, मुक्तिमार्गाभिलाषिता वा, शमश्च कषायेन्द्रियमनसां निरोधः, ज्ञानसंवेगशमाः, विशिष्टाश्च ते चेति कर्मधारयः। त एव सारोऽन्तर्गतो यस्य, तेषां सारं वस्तु तथा। ज्ञानाऽऽदिसारमेव तपस्तपो भवति, नेतरदल्पफलत्वात्। यदाह-"सद्दिं वाससहस्सा" गाहा। "छज्जीवकायवहगा" गाहा। अत इति। यस्मादुक्तयुक्तेर्दुःखाऽऽत्मकमत एतस्माद्धेतोस्तपोऽनशनादि। किमित्याह-क्षयेण उदीर्णचारित्रमोहनीयकर्मणस्तदेन सह उपशमस्तस्यैव विपाकापेक्षया विष्कम्भितोदयत्वं क्षयोपशमः, तत्र भवं क्षायोपशमिकम्, ज्ञेयं ज्ञातव्यम्। न पुनः कर्मोदयस्वरूपम्। तथा अविद्यमाना व्याबाधा अविरतिजनिता अनन्तराः पारम्पर्यकृता वा ऐहिकाः पारत्रिका वा यस्मिंस्तदव्याबाधं, तच्च तत्सुखं च तदेवाऽऽत्मा स्वभावो यस्य तदव्याबाधसुखाऽऽत्मकं प्रशमसुखाऽऽत्मकमिष्टसुखानुकारीत्यर्थः। अनेन च श्लोकेन तपसोऽकर्मोदयस्वरूपत्वमसुखत्वरूपत्वं वाऽऽवेदितम्।

उक्तं चैतदन्यत्रापि-

" जं इथ इमं न दुक्खं, कम्मोवचयो वि सव्वहा नेवं ।
खाओवसमिए भावे, एयं ति जिणागमे भणियं ॥ १ ॥
खंताइसाहुधम्मे, तवगहणं सो खओवसमियम्मि ।
भावम्मि निद्दिट्ठो, दुक्खं चोयइ मे सव्वं ॥ २ ॥ "

एतेन च तपसो दुःखरूपत्वकर्मोदयस्वरूपत्वपरिहारेण सर्वं एव हि दुःखवेद्यमित्यादिश्लोकद्वयाभिहितं तपोदूषणं सर्वं परिहृतमवगन्तव्यम्, दुःखस्वरूपत्वाऽऽश्रयत्वात्तस्येति। अन्ये त्विदमष्टकमेवं व्याख्यान्ते दुःखाऽऽत्मकं, दुःखमेवेत्यर्थः। तपः केचिन्मन्यन्ते, तदेव दुःखाऽऽत्मकतपोमननं न युक्तिमत्। कुत इत्याह-कर्मोदयस्वरूपत्वाद् दुःखस्य। किंवदित्याह-बलीवर्दाऽऽदिदुःखवत्, तपसश्च क्षायोपशमिकत्वादिति। इहैव दूषणा-

षणाए त्ति ) उत्सिञ्चनया ऊर्ध्वं अरघट्टाऽऽदिना ऊर्ध्वाऽऽकर्षणया, तपनेन रविकिरणाऽऽदिना संतापेन क्रमेण शोषणा जलस्य शोषणं भवेद्, नवीनजलाऽऽगमनमार्गो निरुध्यते, पूर्वस्थजलं च निष्कास्यते, जलह्रदो रिक्तः स्यात्, इति भावः ॥५॥

अथ दार्ष्टान्तिकमाह-

एवं तु संजयस्साऽवि, पावकम्मनिरासवे ।
भवकोडिसंचियं कम्मं, तवसा निज्जरिज्जइ ॥ ६ ॥

एवममुना प्रकारेण, पापकर्मनिराश्रवे सति पापकर्मणां प्राणिवधाऽऽश्रवाणां निरोधे सति, संयतस्यापि साधोरपि, तपसा द्वादशविधेन, भवकोटिसंचितं कर्म निर्जीर्यते, आधिक्येन क्षयं नीयते । अत्र कोटिग्रहणं बहुत्वोपलक्षणं, कोटीनियमस्य असंभवात् ॥ ६ ॥ उत्त० ३० अ०।

तप ६ आभ्यन्तरं, ६ बाह्यम्-" दुविहे तवे पण्णत्ते । तं जहा-बाहिरिए य, अब्भिंतरिए य । से किं तं बाहिरए तवे ? । बाहिरिए तवे छव्विहे पण्णत्ते । तं जहा-" अणसणं, ऊणोयरिया, भिक्खायरिया, रसपरिच्चाओ । कायकिलेसो पडिसंलीणया ।" भ० २५ श० ७ उ० । ध० । औ० । दश० । स० । आ०म० । स्था० । पञ्चा० । आ० चू० । आचा० । नं० । उत्त० । जीत० । ( अनशनाऽऽदीनां व्याख्या स्वस्वस्थाने ) "तेणं तवेणं तेएणं पगाढेणं कूडाहच्चं !" तपोजन्यं तेजस्तप एव, तेन तेजोलेश्यया । भ० १५ श० ।

दुःखहेतुत्वात्तपो न कार्यमिति केषाञ्चिन्मतनिरासः ।
वैराग्ययुक्तेन तपो विधेयमतो वैराग्याष्टकानन्तरं तपोऽष्टकमारभ्यते ; तत्रापि परमतमाशङ्कमान आह-

दुःखाऽऽत्मकं तपः केचि-न्मन्यन्ते तन्न युक्तिमत् ।
कर्मोदयस्वरूपत्वा-द्बलीवर्दाऽऽदिदुःखवत् ॥ १ ॥

दुःखमसुखमात्मा स्वभावो यस्य तद् दुःखाऽऽत्मकं, किं तत् ?, तपोऽनशनाऽऽदिरूपमिति कृत्वा, केचिदनधिगतपारगताऽऽगमगर्भार्थाः, मन्यन्ते अभ्युपगच्छन्ति । तदिति तपो, न नैव, युक्तिमत् उपपत्त्या सङ्गतं न, मोक्षाङ्गं तप एव न संभवतीति यावत् । अथ दुःखाऽऽत्मकमपि कस्मात्र मोक्षाङ्गमित्याह-कर्मोदयस्वरूपत्वादिति । कर्मोदयोऽसातवेदनीयाऽऽदिकर्मविपाकः स्वरूपं स्वभावो यस्य तत्तथा तद्भावस्तत्त्वं तस्मात् । तथाहि-भवन्त्यनशनाऽऽदिषु क्षुत्पिपासाऽऽदयः परिषहाः, ते च वेदनीयकर्मोदयसंपाद्या आगमे श्रूयन्ते, इति वेदनीयकर्मोदयाऽऽत्मकमनशनाऽऽदिकर्मोदयस्वरूपत्वाच्च न मोक्षाङ्गं तत्किञ्चिदित्याह-बलीवर्दाऽऽदिदुःखवत्-गवादिगतासातमिव । प्रयोगश्चैवम्-यत्कर्मोदयस्वरूपं, न तन्मोक्षाङ्गं, यथा गवादिदुःखं, कर्मोदयस्वरूपं च तपः, तस्मान्न मोक्षाङ्गमिति स्थितम् । अयं च श्लोकार्थ इमां पञ्चवस्तुकगाथामुपजीव्य भवाऽभिहितः-" एएण जंपि केई, खोऽणसणाई दुहं ति मोक्खंगं । कम्मविवागत्तणओ, भणंति तयं पि पडिसुद्धं ॥ १ ॥ " इति ॥ १ ॥

अथ दुःखस्वरूपस्यापि तपसो मुक्तिमत्त्वाभ्युपगमे पर एव प्रसङ्गमाह-

सर्व एव च दुःख्येवं, तपस्वी संप्रसज्यते ।
विशिष्टस्तद्विशेषेण, सुधनेन धनी यथा ॥ २ ॥

सर्व एव निरवशेष एव यः कश्चिद् दुःखी दुःखवान्, चशब्दो दूषणान्तरसमुच्चये, एवं दुःखाऽऽत्मकस्यापि तपसो युक्तिमत्त्वाभ्युपगमे सति, स तपस्वी तपोयुक्तः, संप्रसज्यते प्राप्नोति, अनशनाऽऽदिदुःखस्य, व्याध्यादिदुःखस्य च दुःखत्वाविशेषात्, दुःखाऽऽत्मकस्य तपसोऽभ्युपगमे च दुःखस्यैव तपस्त्वेनाभ्युपगमादिति भावः । तथा विशिष्टः प्रधानतरः तपस्वी प्रसज्यत इति प्रक्रमः । केनेत्याह-तद्विशेषेण हेतुना । क इव केनेत्याह-सुधनेन प्रचुरधनेन, धनी महाधनो, यथा येन प्रकारेणेति ॥ २ ॥

अथ सर्व एव दुःखी तपस्वी प्रसज्यतां, को दोषः ?, आह-

महातपस्विनश्चैवं, त्वन्नीत्या नारकाऽऽदयः ।
शमसौख्यप्रधानत्वाद्, योगिनस्त्वतपस्विनः ॥ ३ ॥

महातपस्विनः विशिष्टतपोधनाः, प्रसज्यन्ते इति गम्यते, चकारो दोषान्तरसमुच्चये, एवमुक्तप्रकारया, त्वन्नीत्या भवन्न्यायेन दुःखी तपस्वी अभ्युपगमलक्षणेनेति भावः । नारकाऽऽदयो नैरयिकाऽऽदयः, तेषां महादुःखितत्वात्, आदिशब्दान्महावेदनाऽभिभूततिर्यगादेः परिग्रहः । शमः स एव सौख्यं शमसौख्यम् । यदाह-"तणसंथारनिसण्णो, वि मुणिवरो भट्ठरागमयमोहो । जं पावइ मुत्तिसुहं, कत्तो तं चक्कवट्टी वि ?" ॥ १ ॥ शमसौख्यं प्रधानं येषां ते, तेन वा प्रधाना ये ते तथा, तद्भावस्तत्त्वं, तस्माच्छमसौख्यप्रधानत्वाद्, दुःखितत्वादित्यर्थः । योगिनः समाधिमन्तः, तुशब्दः पुनरर्थः, अतपस्विनः अतपोधनाः, दुःखाऽऽत्मकतपसोऽभावादिति भावना त्वन्नीत्या प्रसज्यन्त इति प्रकृतमेवेति ॥ ३ ॥

पर एव स्वपक्षं निगमयन्नाह-

युक्त्यागमबहिर्भूत-मतस्त्याज्यमिदं बुधैः ।
अशस्तध्यानजननात्, प्राय आत्माऽपकारकम् ॥ ४ ॥

युक्तिश्चोपपत्तिः, आगमश्चाऽऽप्तवचनं, ताभ्यां बहिर्भूतं तदननुपाति तद्बाधितं युक्त्यागमबहिर्भूतं, तत्र युक्तिबहिर्भूतता प्रागुपदर्शिता । आगमबहिर्भूतता चैवमवगन्तव्या-"भावियजिणवयणाणं, ममत्तरहियाण नऽत्थि उ विसेसो । अप्पाणम्मि परम्मि य, तो वज्जे पीडमुभओ वि" ॥ १ ॥ अनशनाऽऽदौ तु स्वकायपीडा प्रतीतैवेति । अत इति, यस्मादनन्तरोदितदूषणोपेतमत एतस्माद्धेतोः त्याज्यं त्यागार्हमिदमनशनाऽऽदि दुःखाऽऽत्मकं तपः । कैरित्याह-बुधैर्युक्त्यागमहृदयज्ञैः, न तल्लोकरूढ्या प्रवर्त्तितव्यं भवति, बुधत्वाभावप्रसङ्गादिति हृदयम् । तथाऽऽत्माऽपकारकं स्वस्यानर्थनिबन्धनमिदं, कुतः ?, अशस्तध्यानजननात् अप्रशस्ताध्यवसायोत्पादकत्वात्, प्रायो बाहुल्येन, उत्पद्यते हि भोजनाऽऽद्यभावे अप्रशस्तं ध्यानम् । यदाह-"आहारवर्जिते देहे, धातुक्षोभः प्रजायते । तत्राऽधिकमस्तोऽपि, चित्तभ्रंशं समश्नुते ॥ १ ॥" इह च प्रायोग्रहणात् श्रीमन्महावीराऽऽदिभिर्व्यभिचारपरिहारो दर्शित इति, अतोऽपि त्याज्यमेवेदं बुधैरिति प्रक्रम इति पूर्वपक्षः ॥ ४ ॥

अत्र सूरिरुत्तरमाह-

मनइन्द्रिययोगाना-महानिश्चोदिता जिनैः ।
यतोऽत्र तत्कथं न्वस्य, युक्ता स्याद् दुःखरूपता ? ॥५॥

पूर्वपक्षवादिना यदुक्तम् दुःखाऽऽत्मकं तपो न युक्तिमत्, कर्मोदयस्वरूपत्वात्, तत्र दुःखाऽऽत्मकमिति विशेषणं तपसो न सिद्धमिति तावदावेदयति-कथम् ?, मनश्च चित्तमिन्द्रियाणि च करणानि, योगाश्च प्रत्युपेक्षणाऽऽदयः संयमव्यापारा मनइन्द्रिययोगाः, तेषामहानिरनाबाधना, चोदिता अभिहिता । अथवा-चशब्दः समुच्चये, तेनानुद्धुतता च, उदिता उक्ता, जिनैस्तीर्थकरैः, यतो यस्मात्कारणात्, अत्र तपसि । यदाह-

" सो हु तवो कायव्वो, जेण मणोऽमंगलं न चिंतेइ ।
जेण न इंदियहाणी, जेण य जोगा न हायंति " ॥ १ ॥

तलिमा-तलिमा-स्त्री० । तूर्यवाद्यभेदे, नं० । आ० म० ।

तलिय-तलित-त्रि० । स्नेहपक्वे, नि० १ श्रु० १ वर्ग १ अ० । नि० चू० ।

तलिया-तलिका-स्त्री० । उपानहि, बृ० ।

तलियाउ रत्तिगमणे, कप्पइ तेणे य सावए असहू ।
पुरुगा विचचरीए, वज्झी पुण चिन्धसंघट्टा ॥

तलिकाः क्रमणिकाः, ताश्च रात्रौ गमने कण्टकरक्षणार्थं पदेषु बध्यन्ते, सार्थवशाद्वा पन्थानं मुक्त्वा तत्पथेन गच्छतां स्तेनभयेन, श्वापदभयेन च त्वरितं गम्यमाने दिवाऽपि बध्यन्ते, असहिष्णुः सुकुमारपादः, स कण्टकसंरक्षणार्थं क्रमणिकाः पादयोर्बध्नाति । ताश्च प्रथममेकतलिकाः, तदप्राप्तौ यावच्चतुस्तलिका अपि गृह्यन्ते । पृट्टकानि खल्लकानि, तानि शीतेन पादयोर्विचर्चिकासु विपादिकासु स्फुटन्तीषु बध्यन्ते । वध्री पुनस्तलिकाऽऽदीनां चिह्नानां त्रुटितानानां सङ्घट्टनं तदर्थं गृह्यते । बृ० १ उ० । ध० । व्य० । नि० चू० । ओघ० ।

तलुण-तरुण-त्रि० । प्रत्यग्रे, ज्ञा० १ श्रु० १६ अ० । प्रवर्द्धमानवयसि, आ० म० १ अ० २ खण्ड । रा० ।

तल्ल-देशी-पल्वले, तरुणाऽऽख्ये तृणे, शय्यायां च । दे० ना० ५ वर्ग १७ गाथा ।

तल्लअ-तल्लन-पुं० । तृणविशेषे, प्रश्न० ३ सम्ब० द्वार ।

तल्लक-पुं० । सुराविशेषे, अं० २ वक्ष० ।

तल्लड-देशी-शय्यायाम्, दे० ना० ५ वर्ग २ गाथा ।

तल्लिच्छ-देशी-तत्परे, दे० ना० ५ वर्ग ३ गाथा ।

तल्लेस्स-तल्लेश्य-त्रि० । तत्रैव लेश्या शुभपरिणामरूपा यस्य सः । ग० २ अधि० । अनु० । लेश्या हि कृष्णाऽऽदिद्रव्यसाचिव्यजनित आत्मपरिणामः । तद्विषयलेश्यायुक्ते, विपा० १ श्रु० २ अ० ।

तव-पुं० । तपस्-न० । "स्नमदामशिरोनभः" ॥ ८ । १ । ३२ ॥ इति प्राकृते पुंस्त्वम् । प्रा० १ पाद । तप्यतेऽनेनेति तपः । तापयति अष्टप्रकारं कर्मेति तपतेर्णाऽऽदेः कोऽसुप्रत्ययः । आ० म० १ अ० २ खण्ड । तापयति कर्म दहतीति तपः । पञ्चा० १६ विव० । स० । ताप्यन्ते रसाऽऽदिधातवः कर्माणि वा अनेनेति तपः । ध० ३ अधि० । आ० म० । रसरुधिरमांसमेदोऽस्थिमज्जाशुक्राण्यनेन तप्यन्ते, कर्माणि वाऽशुभानीत्यतस्तपो नामनिरुक्तम् । स्था० ५ ठा० १ उ० । चतुर्थाऽऽदिषण्मासान्ते ( स्था० ६ ठा० ) अनशनाऽऽदौ, प्रश्न० ४ संव० द्वार । आव० । नन्दि० । सूत्र० । नं० । रा० । संथा० । दश० । प्रव० । अष्टमहाजरूप्रतिमासु, उत्त० ३० अ० ।

तवोनिक्षेपः-

निक्खेवो उ तवम्मी, चउव्विहो दुविहो उ होइ दव्वम्मि ।
आगम-नोआगमओ, नोआगमओ य सो तिविहो ॥४३॥
जाणगसरीरभविए, तव्वइरित्ते य पंचतवमाई ।
भावम्मि होइ दुविहो, बज्झो अब्भिंतरो चेव ॥४४॥
मग्गगईणं दुण्ह वि, पुव्वुद्दिट्ठो चउक्कनिक्खेवो ।
पगयं तु भावमग्गे, सिद्धिगईए उ नायव्वं ॥४५॥
दुविहतवो मग्गइ वा, निज्जइ वा जम्ह एत्थ अज्झयणे ।
तम्हा एयऽज्झयणं, तवमग्गगइ त्ति नायव्वं ॥४६॥

गाथाचतुष्टयं प्राग्वत्रवरं ( पंचतवमाइ त्ति ) पञ्चतपः पञ्चाग्नितपो यत्र चतसृष्वपि दिक्षु चत्वारोऽग्नयः ; पञ्चमश्च तपनः । तल्लोके प्रसिद्धमादिशब्दाल्लोकप्रतीतमन्यदपि वृक्षतपःप्रभृति तपो गृह्यते, द्रव्यत्वं चास्याज्ञानमलमलिनत्वेन तथाविधशुद्धानङ्गत्वात् तथाभावे प्रक्रमात्तपो बाह्यमाभ्यन्तरं चात्रैव वक्ष्यमाणस्वरूपं, तथा ( पुव्वुद्दिट्ठो त्ति ) पूर्वत्र मोक्षमार्गगतिनामकेऽध्ययने उद्दिष्टः कथितः पूर्वोद्दिष्टः ( भावमग्ग त्ति ) सुब्व्यत्ययाद्भावमार्गेण मुक्तिपथेन तपोरूपेण ज्ञानदर्शनचारित्राविनाभावित्वाद्भावतपसः । उत्त० ना० ३० अ० ।

नामनिरुक्तमाह-

जहा उ पावयं कम्मं, रागदोससमज्जियं ।
खवइ तवसा भिक्खू, तमेगग्गमणो सुण ॥ १ ॥

यथा येन प्रकारेण भिक्षुस्तपसा रागद्वेषसमार्जितं रागद्वेषाभ्यामुपार्जितं कर्म दारयति, तुशब्दः पादपूरणे । तं तपोमार्गम्, एकाग्रमनाः सावधानचित्तः सन् त्वं शृणु-हे जम्बूस्वामिन् ! अहं यथामति सम्बन्धः, अत्र श्रवणे किल कर्मक्षयः क्रियते ॥१॥

पाणिवह-मुसावाए-अदत्त-मेहुण-परिग्गहा विरओ ।
राईभोयणविरओ, जीवो होइ अणासवो ॥ २ ॥

हे शिष्य ! ईदृशो जीवो निराश्रवो भवति, कीदृशः ?, प्राणिवधमृषावादादत्तमैथुनपरिग्रहाद्विरतः रहितः, पुनः रात्रिभोजनाद्विरतः, एतादृशोऽनाश्रवो भवति ॥ २ ॥

पुनरनाश्रवो यथा भवति तमाह-

पंचसमिओ तिगुत्तो, अकसाओ जिइंदिओ ।
अगारवो य निस्सल्लो, जीवो होइ अणासवो ॥ ३ ॥

कीदृशः ?, जीवः पञ्चभिः समितिभिः समितः सहितः पञ्चसमितः, पुनस्तिसृभिर्गुप्तिभिर्गुप्तः, पुनरकषायः कषायरहितः, पुनर्जितेन्द्रियः वशीकृतेन्द्रियः, पुनरगारवः ऋद्धिरससाताऽऽदिगर्वरहितः, पुनर्निःशल्यः मायानिदानमिथ्यादर्शनशल्यैस्त्रिभी रहितः, एतादृशोऽनाश्रवो भवति ॥ ३ ॥

एवंविधोऽनाश्रवश्च यथा क्षपयति, तथा वदति-

एएसिं तु विवच्चासे, रागदोससमज्जियं ।
खवेइ जं जहा भिक्खू, तमेगग्गमणो सुण ॥ ४ ॥

हे शिष्य ! यथा येन प्रकारेण भिक्षुः साधुरेतेषां पूर्वोक्तानां प्राणातिपातमृषावादादत्तमैथुनपरिग्रहरात्रिभोजनविरतिलक्षणानां व्रतानां तथा समितिगुप्त्यादिलक्षणानामनाश्रवकारणानां विपर्यासे वैपरीत्ये प्राणिवधमृषावादादत्तमैथुनपरिग्रहरात्रिभोजनसमित्यभावगुप्त्यभावसेवने सति रागद्वेषाभ्यां समर्जितं सञ्चितं पापकर्म क्षपयति, तं प्रकारमेकाग्रमना एकाचित्तः सन् त्वं शृणु ॥ ४ ॥

अत्र दृष्टान्तमाह-

जहा महातलागस्स, सन्निरुद्धे जलागमे ।
उस्सिंचणाए तवणाए, कमेणं सोसणा भवे ॥ ५ ॥

यथा महातटाकस्य महाजलाऽऽश्रयस्य जलाऽऽगमे पानीयाऽऽगमनमार्गे सन्निरुद्धे सम्यक्प्रकारेण संवृते सति ( उस्सि-

तरुणग-तरुणक-त्रि० । स्तनन्धये, सूत्र० १ श्रु० ३ अ० ४ उ० । अभिनवे, भ० १५ श०।

तरुणदिवाकर-तरुणदिवाकर-पुं० । अचिरनवोदिताऽऽदित्ये, आव० ४ अ० । अन्त० ।

तरुणधम्म-तरुणधर्म-त्रि० । अविपक्वपर्याये, नि० चू० १९ उ० । तारुण्ये वर्तमाने, आ० म० १ अ० २ खण्ड ।

तिण्हाऽऽरेण समाणं, होइ पकप्पम्मि तरुणधम्मो उ ।
पंचण्ह दसाकप्पे, जस्स व जो जत्तिओ कालो ॥

व्रतपर्यायमधिकृत्य तिसृणां समानां वर्षाणामारेणार्वाक् वर्तमानः प्रकल्पे निशीथाध्ययने तरुणधर्मा अविपक्वपर्यायो भवति, पञ्चानां वर्षाणामर्वाक् वर्तमानस्तु ( दसाकप्पे त्ति ) उपलक्षणत्वाद्दशाकल्पव्यवहाराणां तरुणधर्मा ज्ञातव्यो,यस्य वा सूत्रकृताङ्गाऽऽदेः श्रुतस्य, यो यावान् कालो व्यवहाराध्ययने दशमोद्देशके भणितः, तस्य तावन्तं कालमसमापयन् तरुणधर्मा भवति । यथा-" कप्पइ चउवासपरियायस्समणस्स निग्गंथस्स सूयगडं नाम अंगं उद्दिसित्तए ।" इत्यादि । वृ० १ उ० ।

तरुणपरिकम्म-तरुणपरिकर्म-न० । रोगग्रस्तस्य सतस्तरुणस्य बलविवृद्धिकरणे, व्य० ४ उ० ।

तरुणप्पभ-तरुणप्रभ-पुं० । खरतरगच्छीये जिनकुशलसूरिशिष्ये, अनेन विक्रमसंवत् १४११ मिते श्रावकप्रतिक्रमणविवरणं नाम ग्रन्थो रचितः । जै० इ० ।

तरुणिया-तरुणिका-स्त्री० । अपरिपक्वायाम, आचा० २ श्रु० १ चू० १ अ० ।

तरुणीपडिकम्म-तरुणीप्रतिकर्म-न० । एतदेकत्रिंशत्तमकलाभेदे, युवतीनां वर्णाऽऽदिवृद्धिरूपायां सङ्गसात्क्रियायाम, जं० २ वक्ष० । ज्ञा० । औ० ।

तरुणीपरिकम्म-तरुणीपरिकर्म-' तरुणीपडिकम्म ' शब्दार्थे, जं० २ वक्ष० ।

तरुतिगिच्छा-तरुचिकित्सा-स्त्री० । वृक्षाणां रोगप्रतीकारलक्षणे एकोनपञ्चाशत्पुरुषकलाभेदे, कल्प० ७ क्षण ।

तरुपक्खंदोलय-तरुपक्षान्दोलक-त्रि० । तरुपक्षे तरुपार्श्वे आत्मानमान्दोलयन्ति ये ते तथा । तरुपक्षान्दोलनात्पातेन मृतेषु, औ० ।

तरुपडण-तरुपतन-न० । पिप्पलवटाऽऽदितरूनारुह्य उत्पत्य पतने, नि० चू० ११ उ० । प्र० ।

तरुपतणट्ठाण-तरुपतनस्थान-न० । यत्र मुमूर्षव एवानशनेन तरुवत्पतिता स्तिष्ठन्ति, तरुभ्यो वा यत्र पतन्ति । तथाभूते स्थाने, आचा० २ श्रु० २ चू० ३ अ० ।

तल-तल-पुं० । हस्ततले, जं० १ वक्ष० । नि० चू० । आ० म० । औ० । पाणिपादानामधोभागे, ज्ञा० १ श्रु० १ अ० । नं० । हस्ते, स्था० ८ ठा० । चं० प्र० । ज्ञा० । औ० । कप्रत्ययोऽप्यत्र । आ० म० १ अ० १ खण्ड । मध्यस्वरूपे, स्था० ८ ठा० । अधोभागे, ज्ञा० १ श्रु० १ अ० । प्रतिष्ठाने, " रुप्पमयनिम्मियपुप्फतलं । " प्रश्न० ३ आश्र० द्वार । हस्ततले, रा० । ज्ञा० । दशा० । अतिदीर्घे तालाभिधाने वृक्षे, ज्ञा० १ श्रु० ८ अ० । जी० । आ० म० । ताला वृक्षस्तत्र भवं तालम् । तालवृक्षफले, व्य० १ उ० । ग्राम्ये, शय्यायां च । दे० ना० ५ वर्ग १६ गाथा ।

तलअंट-भ्रम-धा० । " भ्रमेष्टिरिटिल्ल-ढुण्ढुल्ल-ढण्ढल्ल-चक्कम्म-भम्मड-भमड-भमाड-तलअंट-झण्ट-झम्प-भुम-गुम-फुम-फुस-ढुम-ढुस-परी-पराः " ॥ ८ । ४ । १६१ ॥ इति भ्रमधातोः 'तलअंट' इत्यादेशः । 'तलअंटइ' । प्रा० ४ पाद । चलने दिवा०-पर०-सक०-सेट् । भ्राम्यति, अभ्रमीत् । वाच० ।

तलआगत्तो-देशी-कूपे, दे० ना० ५ वर्ग ८ गाथा ।

तलओडा-स्त्री० । गुच्छभेदे, ' तलवडा ' इति गुर्जरदेशे प्रसिद्धम् । प्रज्ञा० १ पद ।

तलजमलजुगलबाहु-तलयमलयुगलबाहु-त्रि० । तलौ तालवृक्षौ तयोर्यमलं युगलं श्रेणिकयुगलं तलयमलयुगलं, तद्वदतिसरलौ पीवरौ बाहू यस्य सः । तालवृक्षसदृशातिसरलपीवरबाहौ, रा० । जं० । तलयमलयुगलपरिघनिभबाहुः तलौ तालवृक्षौ तयोर्यमलं समश्रेणिकं यद्युगलं द्वयं परिघश्चार्गला, तन्निभौ तत्सदृशौ दीर्घसरलपीनत्वाऽऽदिना बाहू यस्य सः । भ० १४ श० १ उ० ।

तलण-तलन-न० । सुकुमारिकाऽऽदेरिव भ्राष्ट्रभर्जने,प्रश्न० १ आश्र० द्वार । अग्नौ स्नेहेन भर्जने, विपा० १ श्रु० ३ अ० ।

तलताल-तलताल-पुं० । हस्ततालेे, कल्प० १ क्षण । सू० प्र० । चं० प्र० । कल्प० । ज्ञा० । भ० । हस्तकौशिकयोः, कल्प० ४ क्षण । चं० प्र० ।

तलपत्त-तालपत्र-न० । तालाभिधानवृक्षपर्णे,ज्ञा० १ श्रु० १७ अ० ।

तलप्फल-देशी-शाल्याम, दे० ना० ५ वर्ग ५ गाथा ।

तलभंगय-तलभङ्गक-पुं० । बाह्वाभरणविशेषे, जी० ३ प्रति० ४ उ० । औ० ।

तलवत्त-देशी-कर्णाऽऽभरणविशेषे, वराहे च । दे० ना० ५ वर्ग २१ गाथा ।

तलवर-तलवर-त्रि० । परितुष्टनरपतिप्रदत्तपट्टबन्धविभूषिते राजस्थानीये,स्था० ९ ठा० । औ० । पञ्चा० । प्रज्ञा० । भ० । जी० । कल्प० । जं० । रा० । अन्त० । ज्ञा० । अनु० । वृ० ।

तलविंट-तालवृन्त-न० । " घञ्वृद्धेर्वा " ॥८।१।६७॥ इत्याकारस्यात्वम् । पक्षे-तालविण्टम् । प्रा० १ पाद । ताले करतले वृन्तं बन्धनमस्य,तालस्येव वृन्तमस्य वा । व्यजने, वाच० ।

तलवेंट-तालवृन्त-न० । ' तलविंट ' शब्दार्थे, प्रा० १ पाद ।

तलसारिअ-देशी-गालिते, दे० ना० ५ वर्ग ९ गाथा । नालिके, दे० ना० ५ वर्ग ६ गाथा ।

तलाअ-तडाग-पुं० । " डो लः " ॥८।१।२०२॥ इति डस्य लः । प्रा० १ पाद । पुरुषाऽऽदिकृते जलाऽऽश्रयविशेषे, प्रश्न० ४ संब० द्वार । प्रज्ञा० । औ० । अनु० । आ०म० । आचा० । आव० । रा० ।

तलाग-तडाग-पुं० । ' तलाअ ' शब्दार्थे, प्रश्न० ४ संव० द्वार ।

तलार-देशी-नगररक्षके, दे० ना० ५ वर्ग ३ गाथा ।

तलिण-तलिन-न० । प्रतले, औ० ।

तलिम-तल्प-न० । शयनीये, ज्ञा० १ श्रु० १६ अ० । कुट्टिमे, शय्यायाम्, गृहोपरिभूम्याम्, वासभवने च । दे० ना० ५ वर्ग २० गाथा ।

तयप्पमाणमेत्त-त्वक्प्रमाणमात्र-न० । 'तयप्पमाणमित्त' शब्दार्थे, बृ० ६ उ० ।

तया-त्वक्-स्त्री० । तृणवनस्पतिकायिकभेदे, स्था० ८ ठा० । वल्कलम्, जी० ३ प्रति०४ उ० । रा० । बाह्यवल्के, स्था० ४ ठा० १ उ० । "तणुओ निक्खलुमो,असोणिओ केवलं तयालग्गो ।" आचा० ५ अ० । त्वगिवाऽसारं भिक्षुद्रव्यमित्यर्थसूचकत्वात् त्वगुच्यते, दशवैकालिकस्य द्रुमपुष्पिकाऽध्ययने. दश० । उक्तं च परममुनिभिः-"चत्तारि घुणा पण्णत्ता । तं जहा-तयक्खाए, छल्लिक्खाए, कट्ठक्खाए, सारक्खाए । एवमेव चत्तारि भिक्खुगा पण्णत्ता । तं जहा-तयक्खाए०" इत्यादि । कल्पाऽसारभोक्तुः कर्मसदसङ्गीकृत्य वज्रसारं तपो भवति । दश० १ अ० ।

तयाणंतर-तदनन्तर-न० । तस्माद्व्यवहितोत्तरे, रा० ।

तयाणुग-तदनुग-त्रि० । तदनुगन्तरि, " विवरीयपन्नसंभूयं, अन्नं वृत्तं तयाणुगं ।" सूत्र० १ श्रु० १ अ० ४ उ० ।

तयामुह-त्वचामुख-पुं० । सुखकारिणि, कल्प० ३ क्षण ।

तयामंत-त्वग्वत्-त्रि० । त्वग्विद्यते यस्याऽसौ । विशिष्टत्वक्शालिनि, रा० ।

तयाविस-त्वग्विष-पुं० । त्वचि विषं यस्य स त्वग्विषः । प्राकृतत्वात् 'तयाविसो' । दर्वीकरसर्पभेदे, जी० १ प्रति० ।

तयाहार-त्वगाहार-पुं० । त्वङ्मात्राऽऽहारकवानप्रस्थविशेषे, औ० ।

तर-तर-पुं० । तरतीति तरः । स्था० ५ ठा० १ उ० । "ऋवर्णस्यारः" ॥८ । ४ । २३४ ॥ इति ऋधातोरन्त्यस्य ऋवर्णस्यार इत्यादेशः । प्रा० ४ पाद । संतरणकर्तरि, तरशब्दो महादोषप्रदर्शने, यथा कृष्णः, कृष्णतर इत्यादि । नि० चू० १ उ० । शक्-धा० । 'शक'सामर्थ्ये, "शकेश्चय-तर-तीर-पाराः" ॥८। ४।८६॥ इति शक्नोतेर्वा 'तर' इत्यादेशः । 'तरइ'। प्रा०४ पाद ।

तरस्-न० । वेगे, बले च । औ० ।

तरंग-तरङ्ग-पुं०। तृ-अङ्ग-अच् । वायुना जलस्य संचालनेन तिर्यगूर्ध्वाऽऽदिप्लवने, वाच० । कल्लोले, प्रश्न० ३ आश्र० द्वार । अष्ट० । कल्प० । वीचिषु, जं० २ वक्ष० । औ० । ह्रस्वकल्लोले, ज्ञा० १ श्रु० ८ अ० । औ० ।

तरंगणंदण-तरङ्गनन्दन-पुं० । स्वनामख्याते राज्ञि, यस्य रतितरङ्गानामा भार्या, रतितरङ्गिणीनाम्ना दुहिता । दर्श० ३ तत्त्व ।

तरंगमालि [ ण् ]-तरङ्गमालिन्-पुं० । समुद्रे, को० ।

तरंगवई-तरङ्गवती-स्त्री० । स्वनामख्यातायां नायिकायाम्,तरङ्गवतीवक्तव्यताप्रतिबद्धे कथाग्रन्थे, दश० ३ अ० । आ० म० ।

तरग-तरक-त्रि० । तरन्तीति तरास्त एव तरकाः । पारगन्तृषु, ( स्था० )

चत्तारि तरगा पण्णत्ता । तं जहा-समुद्दं तरामी एगे समुद्दं तरइ, समुद्दं तरामी एगे गोपयं तरइ, गोपयं तरामी एगे गोपयं तरइ, गोपयं तरामी एगे समुद्दं तरइ ४ । चत्तारि तरगा पण्णत्ता । तं जहा-समुद्दं तरित्ता णाममेगे समुद्दे विसीयइ, समुद्दं तरित्ता णाममेगे गोपए विसीयइ, गोपयं तरित्ता एगे० ४ ॥

( चत्तारि तरगेत्यादि ) व्यक्तम्, नवरं तरन्तीति तरास्त एव तरकाः, समुद्रं समुद्रवत् दुस्तरं सर्वविरत्यादिकं कार्यं तरामि करोमीत्येवमभ्युपगम्य तत्र समर्थत्वादेकः समुद्रं तरति, तदेव समर्थयतीत्येकः । अन्यस्तु तदभ्युपगम्यासमर्थत्वाद् गोपदं तत्कल्पं देशविरत्यादिकमल्पतमं तरति, निर्वाहयतीति । अन्यस्तु गोपदप्रायमभ्युपगम्य वीर्यातिरेकात्समुद्रप्रायमपि साधयतीति । चतुर्थः प्रतीतः । समुद्रप्रायं कार्यं तरित्वा निर्वाह्य समुद्रप्राये प्रयोजनान्तरे विषीदति, न तं निर्वाहयति, विचित्रत्वात् क्षयोपशमस्येति । एवमन्ये त्रय इति । स्था० ४ ठा० ४ उ० ।

तरच्छ-तरक्ष-पुं० । व्याघ्रविशेषे, प्रति० । प्रश्न० । प्रज्ञा० । भ० । स्त्रियां तरक्षी । प्रज्ञा० ११ पद ।

तरण-तरण-न० । प्लवने, सूत्र० १ श्रु० ११ अ० । निस्तारणे, नि०चू० १ उ० । पारगमने, प्लवने च । आ०चू० । तरणं चतुर्धा-णामादिएहिं । णामट्ठवणाओ गताओ । दव्वतरणे तिन्नि तारिज्जंति । तं जहा-दव्वतरओ, दव्वतरणं, दव्वतारियव्वयं । तत्थ दव्वतरओ पुरिसाऽऽदी, दव्वतरणं उडुवादि, दव्वतारियव्वं णदीसमुद्दसराऽऽदि । एवं भावतरणे वि, णवरं भावतरओ जीवो, भावतरणं णाणाऽऽदि, भावतारियव्वयं संसारो कुडुविहो । एवं प्लवनमपि तरणं । आ०चू० १ अ० ।

तरमट्ठ-देशी-प्रवृद्धे, दे० ना० ५ वर्ग ५ गाथा ।

तरतम-तरतम-त्रि० । न्यूनाधिकभावान्वितेऽर्थे, तारतम्येन वर्तमान इति शारीरकभाष्यम् । वाच० । " तरतमजोगजुत्तेहिं जालयपरेहिं अणुज्झमिव अणुप्पइत्तं पिच्छइ ।" कल्प०३क्षण ।

तरमल्लिहायण-तरमल्लिहायन-त्रि० । तरो वेगो, बलं वा । तथा 'मल-मल्ल' धारणे । ततश्च तरो मल्ली धारको वेगाऽऽदिधारको, हायनः संवत्सरो वर्तते येषां ते तरमल्लिहायनाः । यौवनवत्सु, औ० । (?)

तरमाण-तरत्-त्रि० । समर्थे, नि० चू० १ उ० । जं० ।

तरलियमइ-तरलितमति-स्त्री० । विसंस्थुलबुद्धौ, जी० १ प्रति० ।

तरस-देशी-मांसे, दे० ना० ५ वर्ग ४ गाथा ।

तरिअव्व-तरितव्य-त्रि० । निर्वोढव्ये,-"तरिअव्वं व पइन्निअ, मरिअव्वं वा समरे समत्थेणं ।" आव० ४ अ० । उडुपे, दे० ना० ५ वर्ग ७ गाथा ।

तरित्तए-तरीतुम्-अव्य० । लङ्घयितुमित्यर्थे, प्रति० ।

तरिया-तरिका-स्त्री० । घृतदध्यादेर्विकृतेऽवयवे, " पक्कगयं घयकिट्टी, पक्कोसहि उवरि तरियसप्पि च ।" ध० २ अधि० ।

तरु-तरु-पुं० । तृ-उ-गुणः । वाच० । क-ग-च-ज-त-द-प-य-वां प्रायो लुक्" ॥ ८ । १ । १७७ ॥ इह स्वरादसंयुक्तस्यानादेरित्यतोऽनादेरित्यस्याधिकाराल्लुग् न । प्रा० १ पाद । वृक्षे, दश० १ अ० ।

तरुण-तरुण-त्रि० । जन्मपर्यायेण षोडशवर्षाण्यारभ्य यावच्चत्वारिंशद्वर्षाणि तावत्तरुणः । व्य० ३ उ० । इत्युक्तलक्षणे प्रवर्द्धमानवयसि, भ० १४ श० १ उ० । सूत्र० । ग० । उत्त० । नूतने, कल्प० ३ क्षण । औ० । 'तरुणदिवाकरकरेहिं ।' औ० । विशिष्टवर्णाऽऽदिगुणोपेतेऽभिनवे वस्तुनि, जी० ३ प्रति० २ उ० ।

देवास्तमस्कायं कुर्वन्ति-

जाहे णं भंते ! ईसाणे देविंदे देवराया तमुक्कायं काउं कामे भवइ, से कहमिदाणिं पकरेंति ?। गोयमा ! ताहे चेव णं ईसाणे देविंदे देवराया अब्भिंतरपरिसाए देवे सद्दावेइ, तए णं ते अब्भिंतरपरिसगा देवा सद्दाविया समाणा, एवं जहेव सक्कस्स० जाव तए णं ते आभिओगिया देवा सद्दाविया समाणा तमुक्काइए देवे सद्दावेंति । तए णं ते तमुक्काइया देवा सद्दाविया समाणा तमुक्कायं पकरेंति, एवं खलु गोयमा ! ईसाणे देविंदे देवराया तमुक्कायं पकरेइ । अत्थि णं भंते ! असुरकुमारा देवा तमुक्कायं पकरेंति ? । हंता अत्थि । किंपत्तियं णं भंते ! असुरकुमारा देवा तमुक्कायं पकरेंति ?। गोयमा ! किड्डारतिपत्तियं वा पडिणीयविमोहणट्ठयाए गुत्तीसंरक्खणहेउं वा अप्पणो वा सरीरपच्छायणट्ठयाए एवं खलु गोयमा ! असुरकुमारा देवा तमुक्कायं पकरेंति. एवं० जाव वेमाणिया ।

( जाहे णं इत्यादि ) ( तमुक्काए त्ति ) तमस्कायकारिणः । ( किड्डारतिपत्तियं ति ) क्रीडारूपा रतिः । अथवा-क्रीडा च खेलनं, रतिश्च निधुवनं क्रीडारती, ते एव वा प्रत्ययः कारणं यत्र तत्क्रीडारतिप्रत्ययम् । (गुत्तीसंरक्खणहेऊं त्ति) गोपनीयद्रव्यसंरक्षणहेतोरिति । भ० १४ श० २ उ० ।

**तमुयत्त-तमस्त्व-न०।** आत्मन्धतायाम्, अत्यन्ताज्ञानाऽऽवृततायाम्, सूत्र० २ श्रु० २ अ० ।

**तमोकसिय-तमःकाषिक-त्रि०।** तमसि कषितुं शीलं येषां ते तमःकाषिणः,त एव तमःकाषिकाः । परविज्ञाताः क्रियाः कुर्वत्सु, सूत्र० २ श्रु० २ अ० ।

**तम्ब-ताम्र-न०।** 'तंब' शब्दार्थे, प्रा० १ पाद ।

**तम्मण-तन्मनस्-त्रि०।** तत्र देवदत्ताऽऽदिस्तस्मिन् घटाऽऽदौ मनस्तन्मनः । मनोविशेषे, स्था० ३ ठा० ३ उ० । तस्मिन्नेव मनोविशेषोपयोगरूपं यस्य स तथा । तस्मिन् विशेषोपयुक्ते,अनु०, ग० । तद्विषयकद्रव्यमनोयुक्ते, विपा० १ श्रु० २ अ० ।

**तम्मय-तन्मय-त्रि०।** तेषां विवक्षितानामनलानिलतृणवनस्पतिगणानां विकारास्तन्मयाः । तद्विकारेषु, प्रश्न० १ आश्र० द्वार ।

**तम्मयता-तन्मयता-स्त्री०।** तत्परतायाम्, षो० १२ विव० ।

**तम्मित्त-तन्मात्र-न०-त्रि०।** तदेव तन्मात्रम् । मयूरव्यंसकाऽऽदित्वात् समासः । तदात्मके, सा मात्रा यस्मिन् । "तस्मिंस्तस्मिंश्च तन्मात्रा, तेन तन्मात्रता स्मृता । तन्मात्राण्यविशेषाणि, अविशेषास्ततो हि ते ॥ १ ॥ न शान्ता नापि घोरास्ते, न मूढाश्चाविशेषिणः । " इत्युक्तेषु साङ्ख्योक्तेषु पञ्चसु शब्दाऽऽदिकरणीभूतेषु भूतेषु, वाच० । पञ्च तन्मात्राणि । तद्यथा-गन्धरसरूपस्पर्शशब्दतन्मात्राऽऽख्यानि, तत्र गन्धतन्मात्रात् पृथिवी गन्धरसरूपस्पर्शवती, रसतन्मात्रादापो रसरूपस्पर्शवत्यः, रूपतन्मात्रात्तेजो रूपस्पर्शवत्, स्पर्शतन्मात्राद्वायुः स्पर्शवान् । शब्दतन्मात्रादाकाशं गन्धरसरूपस्पर्शवर्जितमुत्पद्यत इति । सूत्र० १ श्रु० १ अ० १ उ० ।

**तम्मित्तय-तन्मात्रज-न०।** शब्दाऽऽदीनि यानि पञ्च तन्मात्राणि सूक्ष्मसंज्ञानि, तेभ्यो जातमुत्पन्नं तन्मात्रजम् । अम्बराऽऽदिषु, स्था० २ ठा० १ उ० ।

**तम्मुत्ति-तन्मुक्ति-स्त्री०।** तेन विवक्षितेन उक्ता सर्वसङ्गेभ्यो विरतिर्मुक्तिस्तन्मुक्तिः । तदुक्तसर्वसङ्गेन विरतौ, आचा० १ श्रु० ५ अ० ५ उ० ।

**तम्मेत्त-तन्मात्र-त्रि०।** 'तम्मित्त' शब्दार्थे, सूत्र० १ श्रु० १ अ० १ उ० ।

**तम्मेत्तय-तन्मात्रज-न०।** 'तम्मित्तय' शब्दार्थे, स्था० २ ठा० १ उ० ।

**तम्मोत्ति-तन्मुक्ति-स्त्री०।** 'तम्मुत्ति' शब्दार्थे, आचा० १ श्रु० ५ अ० ४ उ० ।

**तम्बिर-न०।** देशी-ताम्रस्यार्थे, प्रा० २ पाद ।

**तय-तत-न०।** 'तत' शब्दार्थे, स्था० ४ ठा० ४ उ० ।

**तयक्खाय-त्वक्खाद-पुं०।** त्वचं वल्कलं खादतीति त्वक्खादः । त्वग्भक्षके घुणाऽऽदौ, स्था० ४ ठा० १ उ० । त्वक्कल्पाऽसारभोक्तरि, साधौ च । दशा० १ अ० ।

**तयणवत्युक-तदन्यवस्तुक-पुं०।** तस्मात्परोपन्यासाद्वस्तुनोऽन्यदुत्तररूपं वस्तु यस्मिन्नुपन्यासोपनये स तदन्यवस्तुकः । उपन्यासोपनयोदाहरणभेदे, ( स्था० ) तस्मात्परोपन्यस्ताद्वस्तुनोऽन्यदुत्तररूपं वस्तु यस्मिन्नुपन्यासोपनये स तदन्यवस्तुकः । यथा जले पतितानि जलचरा इत्युक्ते, एतद्विघटनाय पतनादन्यदुत्तरमाह-यानि पुनः पातयित्वा खादति नयति वा तानि किं भवन्ति, न किञ्चिदित्यर्थः, अयमपि ज्ञापकतया ज्ञातमुक्तः, अथवा यथारूढमेव ज्ञानमेव । तथाहि-न जलस्थलपतितानि पत्राणि जलचराऽऽदिसत्त्वाः संभवन्ति,मनुष्याऽऽश्रितानाम् । अयमभिप्रायः-यथा जलाऽऽश्रितत्वाज्जलचराऽऽदितया तानि सम्पद्यन्ते, तथा मनुष्याऽऽश्रिततया मनुष्याऽऽदिभवयूकाऽऽदितयाऽपि सम्पद्यन्ताम्, आश्रितत्वस्याविशेषात्, न च तानि तथाऽभ्युपगम्यन्ते इति जलाऽऽदिगतानामपि जलचरत्वाऽऽद्यसंभव इति । स्था० ४ ठा० ३ उ० । कश्चिदाह-यस्य वादिनोऽन्यो जीवः, अन्यच्च शरीरमिति तस्यान्यशब्दस्याविशिष्टत्वात्तयोरपि तद्वाच्याविशिष्टत्वेनैकत्वप्रसङ्ग इति तस्य जीवशरीरापेक्षया तदन्यवस्तूपन्यासेन परिहारः कर्तव्यः । कथम् ?। नन्वेवं सति सर्वभावानां परमाणुद्व्यणुकघटपटाऽऽदीनामेकत्वप्रसङ्गः । अन्यः परमाणुरन्यो द्विप्रदेशिक इत्यादिना प्रकारेणाऽन्यशब्दस्याऽविशिष्टत्वात्तेषां तद्वाच्यत्वेनाविशिष्टत्वादिति । तस्मादन्यो जीवोऽन्यच्छरीरमित्येतदेव शोभनमित्येतद् द्रव्यानुयोगे, अनेन चैतयोरप्याक्षेपः,तत्र चरणकरणानुयोगेन मांसभक्षणं इत्यादावेव कुग्राहे तदन्यवस्तूपन्यासेन परिहारः । कथम् ?। " न हिंस्यात्सर्वाणि भूतानि " इत्येतदेव विरुध्यत इति । लौकिकं तु तस्मिन्नेवोदाहरणे तदन्यवस्तूपन्यासेन परिहारः । " जहा जाणि पुण पाडिऊण पाडिऊण कोइ खाइ वा णेइ वा ताणि किं हवंति त्ति । " दशा० १ अ० ६ उ० ।

**तयप्पमाणमित्त-त्वक्प्रमाणमात्र-न०।** तिलतुषत्रिभागमात्रे, तच्छालाशनस्य सहते । सू० ६ उ० ।

तस्य स्वकारणकलापोपनिपातकाले समुत्पद्यमानत्वात् । इति प्रत्यक्षेणाऽव्यवहृमानत्वाच्चानुमानेनापि तमसोऽभावरूपताऽस्वीक्रियते ॥ एतत्सकलमपि प्रायेण छायायामपि समानमिति यथासम्भवं योज्यम् । विशेषतस्त्वेतद्द्रव्यताप्रसिद्धिः परिपाटितात्तस्याच्छादकत्वाऽऽकारादवधारणीया । यत्पुनरवाचि-तमसि संवरतः पुंसः प्रतिबन्धः स्यादित्यादि, तदखिलमालोकेऽपि समानमिति स एव अतिविचारयतीति किमतिप्रयत्नेन तदाऽहमाकम् ?। इति सिद्धे तमस्काये द्रव्ये । ( २१ ) रत्ना० २ परि० ।

अथ तमस्कायानां संस्थानम्-

तमुक्काए णं भंते ! कहिं समुट्ठिए, कहिं संनिट्ठिए ?। गोयमा ! जंबुद्दीवस्स दीवस्स बहिया तिरियमसंखेज्जे दीवसमुद्दे वीईवइत्ता अरुणवरस्स दीवस्स बाहिरिल्लाओ वेइयंताओ अरुणोदयं समुद्दं बायालीसजोयणसहस्साणि ओगाहित्ता उवरिल्लाओ जलंताओ एगपएसियाए सेढीए एत्थ णं तमुक्काए समुट्ठिए सत्तरस एकवीसे जोयणसए उड्ढं उप्पइत्ता तओ पच्छा तिरियं पवित्थरमाणे पवित्थरमाणे सोहम्मीसाणसणंकुमारमाहिंदे चत्तारि वि कप्पे आवरित्ता णं उड्ढं पि य णं० जाव बंभलोए कप्पेऽरिट्ठविमाणपत्थडं संपत्ते, एत्थ णं तमुक्काए संनिट्ठिए ॥

(एगपएसियाए त्ति) एक एव, न द्व्यादयः औत्तराधर्य प्रति प्रदेशो यस्यां सा तथा, तया, समभित्तितयेत्यर्थः । न च वाच्यम-एकप्रदेशप्रमाणयेति असंख्यातप्रदेशावगाहस्वभावत्वेन जीवानां तस्यां जीवावगाहाभावप्रसङ्गात् तमस्कायस्य च स्तिबुकाऽऽकाराप्कायिकजीवाऽऽत्मकत्वाद् बाहल्यमानस्य च प्रतिपादयिष्यमाणत्वादिति । (एत्थ णं ति) प्रज्ञापकाऽऽलेख्यालिखितस्याऽरुणोदसमुद्राऽऽदेरधिकरणलोपदर्शनार्थमुक्तत्वात् ॥

तमुक्काए णं भंते ! किं संठिए ?। गोयमा ! अहे मल्लगमूलसंठिए, उप्पिं कुक्कुडगपंजरगसंठिए पण्णत्ते ॥

अधः अधस्तान्मल्लकमूलसंस्थितः शरावबुध्नसंस्थानः समजलान्तस्योपरि सप्तदशयोजनशतान्येकविंशत्यधिकानि यावत्कृत्स्नसंस्थानत्वात् ।

अथ तमस्कायस्य मानान्याह-

तमुक्काए णं भंते ! केवइयं विक्खंभेणं केवइयं परिक्खेवेणं पण्णत्ते ?। गोयमा ! दुविहे पण्णत्ते । तं जहा-संखेज्जवित्थडे य, असंखेज्जवित्थडे य । तत्थ णं जे से संखेज्जवित्थडे, से णं संखेज्जाइं जोयणसहस्साइं विक्खंभेणं असंखेज्जाइं जोयणसहस्साइं परिक्खेवेणं पण्णत्ते । तत्थ णं जे से असंखेज्जवित्थडे, से णं असंखेज्जाइं जोयणसहस्साइं विक्खंभेणं असंखेज्जाइं जोयणसहस्साइं परिक्खेवेणं पण्णत्ते ॥ तमुक्काए णं भंते ! के महालए पण्णत्ते ?। गोयमा ! अयं णं जंबुद्दीवे दीवे सव्वदीवसमुद्दाणं सव्वब्भंतराए० जाव परिक्खेवेणं पण्णत्ते, देवे णं महिड्ढिए० जाव महाणुभावे इणामेव २ त्ति कट्टु केवलकप्पं जम्बुद्दीवं दीवं तिहिं अच्छरानिवाएहिं तिसत्तखुत्तो अणुपरियट्टित्ता णं हव्वमागच्छेज्जा, से णं देवे ताए उक्किट्ठाए तुरियाए० जाव देवगईए वीईवयमाणे० जाव एकाहं वा दुयाहं वा तियाहं वा उक्कोसेणं छम्मासे वीईवएज्जा, अत्थेगइए तमुक्कायं वीईवएज्जा, अत्थेगइए तमुक्कायं नो वीईवएज्जा, एमहालए णं गोयमा ! तमुक्काए पण्णत्ते । अत्थि णं भंते ! तमुक्काए गेहाइ वा, गेहावणाइ वा ?। णो इणट्ठे समट्ठे । अत्थि णं भंते ! तमुक्काए गामाइ वा० जाव सन्निवेसाइ वा ?। णो इणट्ठे समट्ठे । अत्थि णं भंते ! तमुक्काए उराला बलाहया संसेयंति वा, संमुच्छंति वा, संवासंति वा । हंता अत्थि । तं भंते ! किं देवो पकरेइ, असुरो पकरेइ, नागो पकरेइ ?। गोयमा ! देवो वि पकरेइ, असुरो वि पकरेइ, नागो वि पकरेइ । अत्थि णं भंते ! तमुक्काए बादरे थणियसद्दे बादरविज्जुयाए ?। हंता अत्थि । तं भंते ! किं देवो पकरेइ० ?। तिन्नि वि पकरेइ । अत्थि णं भंते ! तमुक्काए बादरे पुढवीकाए बादरे अगणिकाए ?। णो इणट्ठे, णऽण्णत्थ विग्गहगइसमावन्नेणं । अत्थि णं भंते ! तमुक्काए चंदिमसूरियगहगणणक्खत्ततारारूवा ?। णो इणट्ठे समट्ठे, पलिपस्सओ पुण अत्थि । अत्थि णं भंते ! तमुक्काए चंदाभाइ वा, सूराभाइ वा ?। णो इणट्ठे समट्ठे, कादूसणिया पुण सा । तमुक्काए णं भंते ! केरिसए वण्णेणं पण्णत्ते ?। गोयमा ! काले कालोभासे गंभीरलोमहरिसजणणे भीमे उत्तासणए परमकिण्हे वण्णेणं पण्णत्ते, देवे वि णं अत्थेगइए जेणं तप्पढमयाए पासित्ता णं खुभाएज्जा, अहे णं अभिसमागच्छेज्जा, तओ पच्छा सीहं सीहं तुरियं तुरियं खिप्पामेव वीईवएज्जा ॥

( केवइयं विक्खंभेणं ति ) विस्तारेण । क्वचित्-" आयामविक्खंभेणं" इति दृश्यते । तत्र चाऽऽयाम उच्चत्वमिति । (संखेज्जवित्थडे इत्यादि) संख्यातयोजनविस्तृत आदित आरभ्य ऊर्ध्वं संख्येययोजनानि यावत्, ततोऽसंख्यातयोजनविस्तृत उपरि तस्य विस्तारगामित्वेनोक्तत्वात् । ( असंखेज्जाइं जोयणसहस्साइं परिक्खेवेणं ति ) संख्यातयोजनविस्तृतत्वेऽपि तमस्कायस्यासंख्यातद्वीपपरिक्षेपतो बृहत्तरत्वात्परिक्षेपस्यासंख्यातयोजनसहस्रप्रमाणत्वम्, आन्तरबहिःपरिक्षेपविभागस्तु नोक्तः, उभयस्याप्यसंख्यातया तुल्यत्वादिति । ( देवे णमित्यादि ) अथ किमेतत्पर्यमिदं देवस्य महर्द्ध्यादिकं विशेषणमित्याह (जाव इणामेवेत्यादि) इह यावत्करणादेवं दृश्यं, यतो देवस्य महर्द्ध्यादिविशेषणानि गमनसामर्थ्यप्रकर्षप्रतिपादनाभिप्रायेणैव प्रतिपादितानि । ( इणामेव २ त्ति कट्टु त्ति ) इदं गमनमेवमतिशीघ्रत्वाऽऽवेदकचप्पुटिकारूपहस्तव्यापारोपदर्शनपरम्, अनुस्वाराऽश्रवणं च प्राकृतत्वात्, द्विर्वचनं च शीघ्रत्वातिशयोपदर्शनपर इति कारप्रदर्शनार्थः । कृत्वा विधायेति । (केवलकप्पं ति ) केवलज्ञानकल्पं, परिपूर्णमित्यर्थः । वृद्धव्याख्या तु-केवलः संपूर्णः कल्पत इति कल्पः, स्वकार्यकरणसमर्थो वस्तुरूप इति यावत् । केवलश्चाऽसौ कल्पश्चेति केवलकल्प-

भवतीति ब्रूम इति । नैतदुपपत्तिपदवीं प्रतिपद्यते, यतः स्पर्शे-वन्त एव तामसाः परमाणवः प्रोच्यन्ते । यत्पुनस्तत्रोपादेशि-स्पर्शयनस्तत्कार्यद्रव्यस्य क्वचिदप्यनुपलम्भादिति । तदसत्यम्, शीतस्पर्शवनस्तमोद्रव्यस्यैव तत्कार्यस्य दर्शनात् । तत्र स्प-र्शसद्भावे किं प्रमाणम् ?, इति चेत् । तदभावे किं प्रमाणम् ?, इति वाच्यम्, न हि तत्प्रतिषेधकप्रमाणमन्तरेणाऽस्पर्शवत्त्वात् कार्यद्रव्यानारम्भकत्वं त्वया प्रसाधयितुं शक्यते, अस्माकं तु तत्स-द्भावे प्रमाणाभावेऽपि तावद् न काचित् क्षतिः । न च नास्त्येव तत्,प्रत्यक्षस्यैव सद्भावात् । तथाहि-दिवा दिवाकरकराऽऽत-पप्रपातोपतप्तवपुषः पथिकास्तामिस्रासन्नमन्दशैत्यसंपर्कात् प्र-मोदन्ते; न च तापाभावमात्रसूत्रित एव तेषां प्रमोदः, प्रतीति-बाधात्, तन्मात्रनिमित्तो हि घटोऽत्र नास्तीतिवत् तापः संप्र-ति नास्तीति प्रतिषेधमुख एव प्रत्ययः प्रादुःष्यात्; न तु संप्र-ति शीतलीभूतं मे शरीरमिति विधिमुखः; तथात्वे हि तमोऽ-भावमात्रसूत्रित एवायमालोकप्रत्यय इत्यपि ब्रुवदूकस्य वदतो वदनं न वक्रीभवेत् । अथान्धकारनिबन्धनत्वे शैत्यस्पर्शप्रत्य-यस्य निबिडतरघटितकपाटसंपुटे गवलकुवलयकलकण्ठीक-ण्ठकाण्डकृष्णान्धकारैकार्णवीभूते कारागारे क्षिप्तस्य पुंसः सु-तरां तत्प्रत्ययो भवेत्, इति चेत् । तापाभावनिमित्तता-यामपि सुतरां स किं तत्र न स्यात् ?, तत्रात्यन्तं तापाभा-वसम्भवात् । तस्माद् मन्दमन्दसमीरलहरीपरिचय एव अत्र स्पर्शस्येव तत्स्पर्शस्याऽप्यभिव्यक्तौ हेतुः,न चासौ तत्रास्तीति न तत्र तत्प्रतीतिः प्रादुर्भवति । अनुमानतोऽपि तत्र स्पर्शप्रतीतिः,तथाहि-तमः स्पर्शवद्, रूपवत्त्वात्, पृथ्वीवत् । न च रूपवत्त्वमसिद्धम्, अन्धकारः कृष्णोऽयमिति कृष्णाऽऽकार-प्रतिभासात् । ननु यदि तिमिरं श्यामरूपपरिकलितकलेवरं स्यात् तदाऽवश्यं स्वप्रतिभासे आलोकमपेक्षेत, कुवलयकोकि-लतमालाऽऽदिकृष्णवस्तूनामालोकापेक्षचाक्षुषत्वादिति चेत् । तद् नाऽकलङ्कम्, उलूकाऽऽदीनामालोकमन्तरेणापि तत्प्रतिभा-सात् । अथाऽस्मदादिप्रतिभासमपेक्ष्यैतदुच्यते । तदपि न पेश-लम्, यतो यद्यपि कुवलयाऽऽदिकमालोकमन्तरेणाऽऽलोकयितुं न शक्यतेऽस्मदादिभिः,तथाऽपि तिमिरमालोकयिष्यते,विचि-त्रत्वाद् भावानाम्, इतरथा पीतावदाताऽऽदयोऽपि तपनीयमु-क्ताफलप्रमुखानालोकनिरपेक्षचाक्षुषा इति प्रदीपचन्द्राऽऽदयो-ऽपि प्रकाशान्तरमपेक्षेरन् । इति सिद्धं तमो रूपवत् । तथा तमो रूपवत्, काष्र्ण्यवत्त्वेन प्रतीयमानत्वात्, कुवलयवत्, इत्य-तोऽपि तत्र रूपवत्त्वसिद्धिः,न खलु अरूपं कुम्भाभावाऽऽदिकृष्णा-ऽऽद्याकारेण कदाचित् प्रतीयमानमालोकितम्, इति रूपवत्त्व-सिद्धौ च सिद्धं स्पर्शवत्त्वम् । तथा च तामसपरमाणूनां कार्य-द्रव्याऽऽरम्भप्रतिषेधोपन्यस्तमस्पर्शवत्त्वं स्वरूपासिद्धम्, पर-स्य तामसपरमाणूनामप्रसिद्धेराश्रयासिद्धं चेति स्थितम् ॥

द्रव्यगुणकर्मातिरिक्तकार्यत्वमपि न हेतुः, द्रव्यातिरिक्तकार्य-त्वस्य तस्मिन्नसिद्धत्वेनैकदेशासिद्धताऽऽपत्तेः । तत्प्रसिद्धिर्हि तस्याभावरूपतया, अन्यतो वा कुतोऽप्यभिधीयते ?। नाऽऽद्यः पक्षः, परस्पराऽऽश्रयप्रसङ्गात्-अभावरूपतासिद्धौ हि तस्य द्रव्यातिरिक्तकार्यत्वसिद्धिः,ततोऽपि सेति । अन्यहेतुतस्तत्सि-द्धौ तु स एवास्तु, किमनेन सिद्धोपस्थायिना कृतकभक्ति-भृत्येनेव कर्तव्यम् ? ॥

आलोकविरोधित्वमपि न साधीयः, न हि यो यद्विरोधी स तदभावस्वभाव एव, वारिवैश्वानरयोः परस्पराभावमात्रताऽऽ-पत्तेः । अथ सहानवस्थानलक्षणो विरोधस्तिमिरस्याऽभावस्व-भावतासिद्धौ साधनत्वेनाऽभिप्रेतः, न वध्यघातकभावः, स च भावाभावयोरेव संभवी,न पुनर्द्वयोरपि भावयोः, तदिहाऽऽलो-कानवकाशे सत्येव समुज्जृम्भमाणस्यान्धकारस्याऽभावरूपतैव श्रेयसी,कुम्भाभाववदिति चेत् । तदपवित्रम् । अत्राऽपि वध्यघा-तकभावस्यैव भावात्,घनतरतिमिरपूरिते पथि प्रसर्पता प्रदीप-प्रभाप्राग्भारेण तिमिरनिकुरम्बाऽऽडम्बरविडम्बनात् ।

भावरूपताप्रसाधकप्रमाणाभावोऽप्यसिद्धः, तत्प्रसाधकानुमा-नसद्भावात् । तथाहि-भावरूपं तमः, घनतरनिकरलहरीप्रमुख-शब्दैर्व्यपदिश्यमानत्वात्, आलोकवत् । न चाऽसिद्धिः सा-धनस्य ।

यथाहि-

" रहःसङ्केतस्थो घनतरतमःपुञ्जपिहिते,
वृथान्वेषं चक्षुर्मुहुरुपदधानः पथि पथि ।
षट्त्काराद् रूपादपि निभृतसंप्रासरमणी-
भ्रमभ्राम्यद्बाहुर्दमदभिकयोत्तास्यति युवा ॥ १ ॥
पर्यस्तो दिवसस्तटीमगमदस्ताचलस्यांशुमान्,
संप्रत्यङ्कुरितान्धकारनिकरैर्लम्बालका द्यौरभूत् ।
एह्यन्तर्विश वेश्मनः प्रियसखि ! द्वारस्थलीतोरण-
स्तम्भाऽऽलम्बितबाहुवल्लि ! रुदती किं त्वं पथः पश्यसि ? ॥ २ ॥
तिमिरलहरीगुर्वीमुर्वी करोतु विकस्वरां,
हरतु नितरां निद्रामुद्रां क्षणाद् गुणिनां गणात् ।
तदपि तरणे ! तेजःपुञ्जः प्रियो न ममैष ते,
किमपि तिरयन् ज्योतिश्चक्रं स्वजातिविराजितम् ॥ ३ ॥ "

औपचारिक एवाऽयं तत्र तद्व्यपदेश इति चेत् । नैवम्, एतदभावरूपताप्रसिद्धिं विना घनतराऽऽदिव्यपदेशस्य भावरू-पमुख्यार्थबाधाविरहेण तस्यौपचारिकत्वायोगात्; तथात्वेऽपि वा तस्य तमसो भावरूपतैव प्रसिध्यति, न खलु कुम्भाऽऽद्यभा-वस्तथाप्रकारोपचारगोचरचारितामास्तिघ्नुते । तत्र सादृश्याऽऽ-द्युपचारकारणाभावात् । तथा-नाभावरूपं तमः, प्रागभावाऽऽ-द्यस्वभावत्वात् ; व्योमवत् । न चाऽयमपि हेतुरसिद्धः । तथा हि-आलोकस्य प्रागभावः, प्रध्वंसाभावः, इतरेतराभावः, अ-त्यन्ताभावो वा तमो भवेत् ?। आद्ये-एकस्य, अनेकस्य वाऽयं तत्स्यात् ?। न तावदेकस्याऽऽलोकस्य प्रागभावस्तमः, प्रदी-पाऽऽलोकेनेव प्रभाकराऽऽलोकेनाऽपि तस्य निवर्त्यमानत्वात्, यस्य हि यः प्रागभावः स तेनैव निवर्त्यते, यथा पटप्रागभा-वः पटेनैव । नाप्यनेकस्य,एकेन निवर्त्यमानत्वात् पटप्रागभाववदेव । न च वाच्यं प्रत्यालोकं स्वस्वनिवर्तनीयस्य तमसो भेदा-त् प्रदीपाऽऽदिना निवर्तितेऽपि तमोविशेषे सूर्याऽऽदिनिवर्तनीयं तमोऽन्तरं तदा तदभावान्न निवर्तते, इत्येकेन निवर्त्यमानत्वा-दिति हेतुरसिद्ध इति, प्रदीपाऽऽदिनिवर्तिततमसि प्रदेशे दिनक-राऽऽदिनिवर्तनीयस्य तमोऽन्तरस्योपलब्धिलक्षणप्राप्तस्यानुपल-ब्धेः, सम्प्रतिपन्नवत् । यदि चेत्र प्रागभावस्वभावं स्यात्, त-दा प्रदीपप्रभाप्रबन्धप्रध्वंसेऽस्योत्पत्तिर्न स्यात्, अनादित्वात् प्रागभावस्य । नाप्यालोकस्य प्रध्वंसाभावस्तमः, निवर्त्यमान-त्वात्, तस्यैव प्रागभाववत् । नापीतरेतराभावः, तस्य प्रस्तुतेऽ-पि प्रत्यक्षे मार्तण्डीये तेजसि सद्भावेन तमिस्रायामिव वा-सरेऽपि तमःप्रतीतिप्रसङ्गात् । नाऽप्यालोकस्यात्यन्ताभावस्तमः,

